स्थोक्तेः । आधिकारिकाः-अधिकारेषु नियुक्ता हिरण्यगर्भादयः; मण्डलानि तेषां लोकाः; तत्स्थाः भोगाः मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः; 'तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यादिनोच्यते । अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थान् सर्वान् ब्रह्मविभूतिभूतान् अनुभवतीति अनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवत् मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातम्, अल्पं च स्यात्; तत्राह—

विकारावर्ति च तथा हि स्थितिमाह ४।४।१९॥

विकारे—जन्मादिके न वर्तत इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम् । तथा हि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः, (तै. आन. ७-२-१) "यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति", "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका । तद्विभूतिभूतं च जगत् तत्रैव वर्तते, "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः । अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्त इति, (छा. ७-२५ २) "सर्वेषु कामचारः" इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः ॥ १९ ॥

---

विहाररूपो व्यापार इति प्रतिवक्ति आधिकारिकेति । मुक्तस्य तत्र नाधिकारलेशोऽप्यस्तीति भावः । प्रत्यक्षेणेत्यस्य श्रुत्येति व्याख्यानम् ॥ १८ ॥

विकारावर्तीति ब्रह्मोच्यते । निर्विकारं ब्रह्माप्यनुभवति विकारिलोकैः साकम्; नैतत् बद्धस्य । ब्रह्मशेषतया सर्वानुभाविना मुक्तेन ब्रह्मणा सह भूतभवद्भविष्यत्सर्वविकारानुभवोऽपि क्रियते । न तु ब्रह्म विना स्वतन्त्रतया तत्तन्मात्रानुभव इत्यविशेषो नेति । विकारावर्तीति पदप्रयोगः दुःखसंकीर्णत्वानुभवविच्छेदयोरभावद्योतनायापि भवति । बद्धा यथा परिणामरूपविकारविशेषे सजन्ति, न तथा मुक्ताः । विकारवर्तिवत् विकारावर्त्यपि सर्वमनुभवन्ति । अनुकूलतायां विकारत्वं न प्रयोजकम् । किं तु ब्रह्मशेषत्वम् ॥ १९ ॥

ननु सत्यसंकल्पत्वादिकं जीवस्य स्वाभाविकं रूपमिति प्रागुक्तम् । यत् स्वाभाविकमनादिवस्तुगतम्, तत् अन्याधीनं न भवितुमर्हति । एवमनन्याधीनशक्तिसंपन्नस्य जगद्व्यापाराभावो दुर्वचः । न चैवं लक्षणत्वभंगः । मुक्तानां जगद्व्यापारवत्त्वस्य मुक्त्यनन्तरमेव संभवात् ततः प्राचीनजगन्निर्माणस्य तैः करणासंभवात् सर्वजगत्कारणत्वरूपलक्षणस्य मुक्तेष्वप्रसक्तेः । नन्वेवं मुक्तसाधितस्य जगतः ईश्वरानधी-

## दर्शयतश्चैवं प्रत्यक्षानुमाने । ४ । ४ । २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न संभवतीत्युक्तम्; निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती, (तै. आन. ८-१) "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति, (बृ. ५-८-६) "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिः; तथा (बृ. ६-४-२२.) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति च श्रुतिः। स्मृतिरपि (गी. ९-१०) "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति, (गी. १०-४२) "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति च। तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः, (तै. आन. ७-२१) "एष ह्येवानन्दयाति", (गी. १४-२६, २७) "मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते। ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति। यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाऽऽविर्भूतः— तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम्; तस्य नित्यस्थितिश्च तदायत्ता। परमपुरुषस्यैतन्नित्यतायाः नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः। एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य, परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते। अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च जगद्व्यापारवर्जम् ॥२०॥

---

नत्वात् सर्वजगत्कारणत्वासंभव इति चेन्न-स्वरूपाविर्भावप्रतिबन्धककर्मनिवृत्तेः परमात्माधीनत्वेन तदनन्तरमुक्तकर्तृकसृष्टेरपि परम्परया तदधीनत्वमात्रेण सर्वकारणत्वोपपत्तेः। विश्वामित्रादिष्वपि विलक्षणजगत्सर्गशक्तेषु प्रमाणसिद्धेषु कैमुत्यसिद्धं किल मुक्तानां शक्तत्वम्। अतः परमसाम्यादिश्रवणबलात् सर्वैश्वर्यमभ्युपेत्यमित्याशंकायाम् परमपुरुषादन्यत्र तदभावप्रतिपादनपर्यवसायि वाक्यजातं दर्शयति **दर्शयतश्चेति**। गीतायां **ब्रह्मण** इति शुद्धजीवार्थकम्। पूर्वार्धे कैवल्यं तृतीयपादे ऐश्वर्यं तुरीये मोक्षश्च विवक्ष्यते। ननु स्वाभाविकधर्मत्वेन स्वीकृतस्य कथमन्यायत्तत्वम्, व्याघातादिति पृच्छति **यद्यपीति**। प्रत्याह **नित्यताया** इति। नन्विच्छानन्तरं यदि भवेत्, तदैवेच्छाधीनत्वम्; कथमेवम्भूतस्य स्वाभाविकत्वं नित्यत्वं चेति चेत्—अत एव **इष्टत्वादित्यनुक्त्वा नित्येष्टत्वादित्युक्तम्**। अनादौ काले नित्यपदार्थस्वरूपादीनां तत्तत्क्षणे स्थितिं प्रति तत्तत्पूर्वक्षणावच्छिन्नेश्वरेच्छायाः कारणत्वात् एवं प्रतिक्षणमेवेच्छासत्त्वात् सर्वोपपत्तिरिति। इच्छा चेयम्, इदं नित्यं भवतु इति वा भवत्वित्येतावन्मात्राकारा वा भवतु। "इच्छात एव तव विश्वपदार्थसत्ता" इत्यभियुक्तवचनमेतदर्थकमेव ॥

## भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ । २१ ॥

**ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्जमित्यवगम्यते, (तै. आन. १-२) "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥**

---

एवं तावत् जीवानां स्वाभाविकं रूपमपि परमात्माधीनमेवेत्युक्तम् । एतावता जगद्व्यापारः सर्वथा न भवतीति कथं सिद्धमिति चेत्—उच्यते-कोऽयमापाद्यमानो जगद्व्यापारः, किं जगदुपादानत्वम् उत निमित्तत्वम् । तत्रापि व्यष्टिसमष्टिसर्वविषये, उत कतिपयव्यष्टिविषये । 'य आत्मनि तिष्ठन्' इत्यादिना जीवान्तर्यामितायाः, 'योऽव्यक्तमन्तरे संचरन्' इत्यादिना प्रकृत्याद्यन्तर्यामितायाश्चैकस्मिन्नेवैवमवगमात विशिष्टवेषेणोपादानत्वस्य मुक्तेषु न प्रसक्तिः । एवञ्चैकजीवव्यष्ट्युपादानत्वमप्येषामसंभावितम् । निमित्तत्वमपि परमात्मसंकल्पाधीनसंकल्पमादायैव वक्तव्यम् । तत्र वल्लतेन तत्संकल्पेनैव निर्वाहे किमस्ति मुक्तसंकल्पस्य प्रयोजनम् । मिथोविरोधपरिहारायानन्तमुक्तान्तरसंकल्पाविरोधप्रतीक्षस्यान्यथासिद्धस्य च मुक्तसंकल्पस्य कारणत्वमतो न घटते । संकल्पश्चायम्, अहं बहु स्यां प्रजायेयेति न भवति; अनन्तर्यामित्वात् । अन्यादृशश्च संकल्पो नैव श्रुतोऽस्ति । अन्ततश्चतुर्मुखादिवत् व्यष्टिं प्रति निमित्तत्वं संभाव्यते । तत्रापि तदर्थानेकपुण्यकर्मानुष्ठानपूर्वं फलप्रतीक्षेषु जाग्रत्सु जीवेषु बद्धेषु, न मुक्तान् नियोक्ष्यतीति तत्त्वस्थितिः । काममियं शक्तिः परिमिता स्वीक्रियतां मुक्ते । नित्यसूरीणां तु केषाञ्चित् प्रकृतिपुरुषाद्यभिमानितया भगवता क्लृप्तानां व्यवस्थितविषये संकल्पः कारणं भवेन्नाम । अन्यसृष्टलोकेष्ववान्तरानेकसृष्टिस्तु परमात्माराधनशेषतया मुक्तकार्येप्यस्त्वेवेत्यलम् । सर्वमिदमभिप्रेत्य निगमितम् **अतो मुक्तस्येति** ॥२०॥

तर्हि परमसाम्यश्रुतिनिर्वाहः क इत्यत्राह **भोगमात्रेति** । यदंशे साम्यं श्रुतम्, तत्र पारम्यं=तारतम्याभाव एव तदर्थः; न तु सर्वांशसाम्यमिति भावः । सर्वत्र श्रुतौ तत्तद्देवतासायुज्यं हि वर्ण्यमानं न तत्तद्देवतागतमधिकारमपि भोक्तरि स्थापयेदिति दर्शयितुं सूत्रे चकारः ॥ एतेन सति पारतन्त्र्ये दुःखमवर्जनीयमिति शंकाऽपि शमिता । "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" इति वचनात् स्वातन्त्र्यं सुखाय, पारतन्त्र्यं दुःखायेति न नियन्तुं शक्यम् । स्वातन्त्र्यपारतन्त्र्ययोः तात्कालिकसुखत्वदुःखत्वप्रतीतिसद्भावेऽपि विपरीतपर्यवसानस्यापि दर्शनात् । न हि स्वातन्त्र्यनिबन्धनमुद्बन्धनं सुखाय; न च बालानां हितैषिपित्रादिशासनातिक्रमः सुखाय, न वा सदुपदेशमूलतदनुवर्तनं दुःखाय । अतः विवेकिन एव स्वातन्त्र्यं सुखाय । तथा विवेकिनं परं प्रति पारवश्यं सुखायैव । स्वप्रयोजनपरप्रयोजनयोर्विप्रतिषेधे परः स्वप्रयोजनदृष्टिः स्वपरतन्त्रमप्युपेक्षेतेति कृत्वा पारतन्त्र्यं दुःखायेत्युच्यते । विप्रतिषेधस्यैव मोक्षे न प्रसक्तिः; मुक्तानां सर्वज्ञतया स्वाम्यभिप्रायापरिज्ञानाभावात स्वामिप्रयोजनातिरिक्तप्रयोजनाकांक्षस्वाभावाच्च । अस्ति चापेक्षितं स्वातन्त्र्यमपि; अप्रतिहतेच्छत्वादिति ॥ २१ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसंभवाशंकेत्यत्राह—

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् । ४ । ४ । २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसंभावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते—एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनान् अनादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च, (छा. ८-१५-१) "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते [न च पुनरावर्तते]" इत्यादिकः । तथा च भगवता स्वयमेवोक्तम्, (गी ८-१५, १६) "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति ।

न च उच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यान-

---

नन्वेवमैश्वर्यसंकोचे तत्र मा भूत् भोगसंकोचः । अथाप्यावृत्तिशंकया दुःखप्रसक्तिः; आवृत्तौ दुःखनिमग्नत्वञ्चावर्जनीयमित्यत्राह अनावृत्तिरिति । ननु पूर्वं तन्त्वभावे संध्यवदिति, अत्र च दर्शयतश्चैवमिति भगवदधीनत्वस्योक्ततया मुक्तकार्यं सर्वं तदधीनमिति, कथञ्चित् जगद्व्यापारस्वीकारेऽपि भगवदधीनतयैव तत्स्वीकारसंभवात् तत्र पूर्वपक्षिणा तदनधीनत्वस्यापि स्वीकर्तव्यत्वाभावात्, अनधीनत्वपक्षे जगद्व्यापाराभावेऽपि स्वातन्त्र्यसंभवाच्चैतत्सूत्रस्य एतदधिकरणासंबन्धादेतच्छेषत्वं विना पृथगधिकरणत्वमेव युक्तमिति चेत्—न; संभवत्यैकाधिकरण्ये पार्थक्यायोगात् । भवति हि तदनुगुणा शंका—जगद्व्यापारादेरप्यस्मिन् स्वीकृतौ सर्वस्वामितया साम्येन स्वातन्त्र्यात् न स एनमावर्तयितुं प्रभवतीति स्यात् । अन्यथा त्वावर्तयेदपीति ।

शब्दो द्विविधः श्रुतिः स्मृतिश्चेति । प्रकारान्तरेणापि द्विविधः, साक्षादनावृत्तिबोधकः, अनावृत्त्याक्षेपकार्थप्रतिपादकश्चेति । तत्र **न च पुनरावर्वत** इति प्रथमः । **मामुपेत्ये**ति द्वितीयः । तृतीयः **प्रियोही**त्यादिः । क्रमेणात्र सर्वभाषणम् । **यथे**त्यादिना सिद्धतत्त्वपरपूर्वाध्यायद्वयार्थसंग्रहः । **एव**मित्यादिनोत्तरद्विकार्थस्य साध्यस्य । पुरुषार्थगतपारम्योपयोग्यंशकथनं **निखिले**त्यादिना । अभिगम्यत्वानुगुणाकारकथनमा**श्रिते**त्यादिना । आकारद्वयसिद्धांशो **निरस्ते**तिपदोक्तः । द्वितीयाध्यायार्थाभिप्रायकश्चेदं पदम् । संसिद्धौ पारम्यविशेषणं कैवल्यस्यापि व्यावर्तनाय । **पुनरावर्तिन** इति । लोकानामेव पुनः पुनरुत्पत्तिकथने प्रजानामस्थिरत्वं कैमुत्यसिद्धम् । लोकानां पुनरावृत्तिर्नाम सजातीयलोकान्तररूपपरिणामः । **विद्यते** लभ्यते ; अत **उपेत्ये**ति पुरुषकर्तृकत्वान्वयोपपत्तिः । अस्तीत्यर्थे हि न समानकर्तृकत्वम् ।

सूचकशब्दं दर्शयितुमारभते **नचोच्छिन्ने**ति । ननु येन केनापि हेतुना पुनरावृत्तिशंका यदि,

**वधिकातिशयानन्दं ब्रह्मानुभवतः अन्यापेक्षातदर्थारम्भाद्यसंभवात् पुनरावृत्तिशङ्का । न च परमपुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति, य एवमाह—** (गी ७-१७, १८, १९) **"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति । सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति—इति सर्वं समञ्जसम् ॥ २२ ॥**

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

श्रीशारीरकमीमांसाशास्त्रं श्रीभाष्यञ्च परिसमाप्तम् ॥

**श्रीमते रामानुजाय नमः ॥ श्रीरस्तु ॥ शुभमस्तु ॥**

---

तर्हि जीवगतधर्मोऽपि न हेतुरिति वक्तव्यम् । ईश्वरः स्वातन्त्र्यादावर्तयेदिति शंकयैव प्रवृत्ते सूत्रे ईश्वरे तद्धेतुप्रतिषेध एव कार्यः । अत उपरि **नचे**त्यादिकं संगतम्; न त्विदं जीवे तद्धेतुप्रतिषेधकं संगतमिति चेत्—उच्यते । अनावृत्तिसूचकार्थप्रतिपादकशब्दोदाहरणं चिकीर्षुः तदेव हि सूचकत्वं भंग्या प्रथममुपपादयति । तत्र, 'स च मम प्रियः' इतीदं प्रकृतम् । ततः प्राक् 'प्रियो हि ज्ञानिनोऽत्यर्थम्' इत्यस्य सद्भावात् तस्यापि अनावृत्तिसूचकत्वमस्तीति अर्थादुपपादयितुमिदं वाक्यमिति । यद्वा स्वातन्त्र्यादीश्वर आवर्तयेदिति पृच्छतः क आशयः—किं संसार इव जीवधर्मसापेक्षेण स्वातन्त्र्येणेश्वर आवर्तयेदित्युच्यते, उत निरपेक्षेण । नाद्य इत्याह **नचे**ति प्रथमवाक्येन । जीवस्य कर्म वा कांक्षा वा नास्तीति न तदनुरोधिस्वातन्त्र्यं कारणमिति भावः । अथवेश्वरस्वातन्त्र्ये यथा, तथा जीवस्वातन्त्र्येऽपि जीवेच्छयैवाऽऽवृत्तिशंका भवत्येव । यदि तत्र जीवस्येच्छा न भवितुमर्हतीति मत्वा शब्दप्रमाणमादाय स्वयं जीवस्याऽऽवृत्तौ कारणं नेत्युच्यते, तुल्यमिदमीश्वरेऽपीति ज्ञापनार्थमिदम् । एवञ्च दृष्टान्तार्थमिदं वाक्यमिति । **उच्छिन्ने**त्यादि सर्वं हेतुगर्भविशेषणम् । नेत्यत्र साक्षाद्धेतुः **अन्यापेक्षातदर्थारम्भाद्यसंभवा**दिति । न **ब्रह्म** अनुभवतः पुनरावृत्तिशंका, अन्यापेक्षाद्यसंभवादित्युक्तं भवति । **अन्यत्** ऐश्वर्यं कैवल्यञ्च । **वासुदेवः सर्वमितीति पूर्वत्रान्वेति** । **सर्वं**=प्राप्यः प्रापकः; माता पिता दाराः पुत्रः क्षेत्रमित्यादिस्थानापन्नश्च । **सूत्राभ्यास** इति । पदाभ्यासः प्राक् अध्यायसमाप्तिद्योतनाय कृतः । पूर्णसूत्राभ्यासः पूर्णग्रन्थसमाप्तिद्योतनाय । **इति सर्वं समञ्जसम्** । **इति**-एवमुपपादिते प्राच्यरीत्यनुसारिणि सर्वसूत्रार्थे साङ्गवेदवेदान्तसहितं पूर्वोत्तरभागद्वयात्मकमीमांसाशास्त्रं कृत्स्नं समञ्जसम् । यद्वा **इतीदं** सर्वं शास्त्रस्वरसार्थत्वात् समञ्जसम् ॥

1. नाथयामुनमुखैर्मतान्तरक्षेपपूर्वमुपपादितं मतम्। वेदसूत्रगणरूढमद्भुतं दर्शयन् जयति लक्ष्मणो मुनिः॥
2. यतीन्द्रवचनामृतस्वदनजीवनौ संश्रये सुदर्शनगुरुत्रयीशिखरदेशिकौ विश्रुतौ ।

निरर्गलमबोधयन्निखिलभाष्यवाक्यानि यः, ररक्ष कृतिभिर्मतं निपुणमद्भुताभिश्च यः ॥

3. साक्षात्स्वामीत्यभिख्यप्रवरयतिसदृक्-तर्कपाथोजभानु-
श्रीमद्वेदान्तरामानुजयतिचरणाम्भोजभृङ्गायमाणः ।
विद्वच्छिष्यव्रजाभिष्टुत बहुकृतिकृद्रङ्गरामानुजाख्य-
ख्यातश्रीयोगिदीक्षाबलदृढविदिताशेषवेदान्तमर्मा ॥

4. आस्थापूर्वमुपागतान् बहुविधान् अध्याप्य विद्यार्थिनः
तन्त्रन्यायनिरूढबोधमहिता निर्माय नाना कृतीः ।
नानोपाख्य उपेतराष्ट्रपतिसंमानप्रकर्षश्च यो
वात्स्यः सोऽकृत **वीरराघव** इमं **भाष्यार्थसद्दर्पणम्** ॥

5. भाष्यस्याध्ययनं प्रवर्तनमपि स्यादाद्यकैङ्कर्यमि-
त्यादेशं यतिपुङ्गवस्य शिरसा धृत्वाऽखिलैर्वैष्णवैः ।
आर्हन्तीमधिगम्य शास्त्रपठनादास्वादनीये रसे
दासः श्रीहयवक्त्रदेशिकदृशा धन्योऽस्मि लब्धान्वयः ॥

6. निगमशिरोगुरुप्रमुखसद्गुरुसाधुकृता-
धिकरणदर्पणादि विलयं बत यातमिह ।
वरशतटिप्पणादिगदितार्थगणं भवतात्
तदपि निरूपणीयबहु राजति भाष्यमिदम् ॥

7. उपनिषदः प्रकाश्य कृतभाष्यपरिष्करणाः परमतशोधनीरपि कृतीः कृतिरुद्यमिनः ।
अपि शुभदिव्यसूरिनिगमव्रजरक्षिकृतेः अभिनवदेशिकादियमभूत् शकसज्जये ॥

8. **भाष्यार्थदर्पण**न्यस्तचक्षुषां सर्वदर्शकः । प्रीयतां फणिराजाद्रिपारिजातः प्रियः श्रियः ॥

इति श्रीमद्वेदान्तरामानुज-यतीन्द्र-महादेशिक चरणारविन्दचञ्चरीकस्य श्रीमद्रङ्गरामानुजमुनीन्द्र-महादेशिकपदपद्म सेवासमधिगतसर्ववेदान्तार्थस्य तर्कार्णव-पूर्वोत्तरमीमांसाप्रदीपादि-बहु-विरुदभाजः प्रौढानेकतर्कमीमांसावेदान्तादिग्रन्थनिर्माणालङ्कर्मीणस्य श्रीवात्स्यश्रीशैल-सच्चक्रवर्तिनः पवित्रहृदयाचारपद्माधिवासिनीश्रीचक्रवर्त्याचार्यपुत्रस्य वीरराघवाचार्यस्य अभिनवदेशिकस्य कृतिषु श्रीभाष्यव्याख्याने भाष्यार्थदर्पणे चतुर्थाध्याये चतुर्थः पादः ॥

**भाष्यार्थदर्पणः संपूर्णः ।**

श्रीमते रामानुजाय नमः । श्रीगुरुपरम्परायै नमः ॥

शुभमस्तु ॥

# श्रीभाष्ये शारीरकसूत्र अकारादि सूची

[ पुटसंख्या ]

# ब्रह्मसूत्राधिकरणानाम् अकारादिसूची।

॥ श्रीरस्तु ॥

# शोधनिका

| | | |
|---|---|---|
| 442- 1 अहन्यमानस्य | 520-22 विगृह्यम् | 577-18 स्वाभाविक..नित्यज्ञाना |
| 14 तमभ्यर्च्य | 523- 4 कात्स्न्येन वा | 27 ज्ञानत्वाभ्युपगमे |
| 26 श्रुत्यर्थ | 524-22 दूषणं | 29 सर्वलोपलब्धि....तदुत्पत्ति |
| 444-10 विश्वसनीय | 526-18 परमाणुकारण | 578-19 इव विशेषण |
| 30 यथाश्रुतमेव | 535-10 क्षणिकत्वभंग: | 583- 8 अपितु |
| 452-20 दर्शयति | 537-11 संक्रमणं | 585-19 प्रतिषिध्यते |
| 453-13 असमवायि | 541- 7 मात्रप्रमाणक | 586-22 व्यापारेषु |
| 457- 8 आश्रय | 546- 7 स्वाभाविकात्म | 23 तत्तत्कार्यायत्तम् |
| 460-14 दूषणमुपर्यु | 20 मनोवाक्काया | 587- 9 उपलब्धिवदनियम: |
| 461- 7 शास्त्रमेव....पबृंहणा | 550-16 अगोत्यमचेतनं | 588-30 षेधश्रुतिभि |
| 8 शास्त्राविरोधिना | 29 प्रमाणानुसारेण | 589-12 कृतं प्रयत्नं |
| 467-10 रज्ज्वादे: सत्यता | 553 30 परिहृता भवति | 19 तत्कृतीनां |
| 468- 7 नुपलब्धेश्च... साधित | 555-15 पुंलिङ्ग | 21-22 विधिनिषेधयोरा |
| 471-12 तदीयकर्मसंक्रम: | 556- 2 समाश्रयणीयत्वाय | 590- 5 स्वयमेव |
| 474-10 अपारमार्थिकी | 559-20 पाञ्चरात्रे | 16 प्यप्रार्थितोऽपि |
| 475-29 परिच्छेद्भावेऽपि | 560- 2 तदेकंतत्त्वम् | 18 एवञ्चेदं |
| 478;13 भ्रमासंभवात् | 17 अनुसंदधानस्य | 30 अप्रतिष्ठं ब्रह्माना |
| 480 26 सर्वैर्भेदवादिभि: | 565-27 तेज:प्राथम्य | 591-14 भेदश्रुति....अंशश्रुति |
| 27 आनन्त्यश्रुते: | 567-17 शास्त्रैक....अमृतत्व | 593-30 आधेयत्वविधेयत्वादि |
| 481-24 उत्पाद्योत्पादक | 569-16 प्रस्तुतत्वात् | 594-11 जीवब्रह्मसंबन्धस्य |
| 25 नामधेयस्य | 20 पुंलिङ्ग | 595- 1 ब्रह्मणि |
| 487-28 उपलभ्यमान | 27 श्रूयते | 596- 4 चकारात् |
| 489-23 लोके वेदेच | 572- 6 स्यात् | 599-30 दर्शयिष्यते |
| 498- 6 निरवयवत्वं | 574-22 चिदचिद्ब्रह्मसु | 600-24 सूत्रमवतारयतीति |
| 501-14 इति स्त्रीलिंग | 26 दर्शयति | 602-19 तत्सत्त्वस्येष्टत्वादिति |
| 505 टी 12 पराभ्यूह | 27 इत्यादिश्रुति | 603-28 केषाञ्चिदेव |
| 506 टी 1 मुमुक्षून् | 575-24 प्रतिकूलो | 30 कालमात्रभवा: |
| 518-20 एवंव्याहत | 576-27 सिद्ध्यति | 604- 5 वर्णननिरासोऽपि |

604- 8 प्रामाणिकेसति
605-26 अह्न आसीत्
606-11 मनुषक्तमेवो
22 वाक्यानि च
30 पृथक्चेष्टा
607--15 (बृ. 3,5,21)योऽयं
608- 6 यस्मिन्नुत्क्रान्ते
21 चक्षुरादिसंमतकरण
614- 3 मूर्तिकृतिः
61‾-25 निष्पत्तिवाक्यपाठ
619-22 त्कोऽपरमात्मनि
24 वैराग्यस्य
622-25 इति ।
623-15 अविषयकाः
30 विषयिणः
625-21 अपि ततो जीव
626 16 चण्डालादि
629- 3 आचारानुमित
13 गतिश्रवणात्
20 पृथङ्निर्देशस्य
639-15 शन्तिाभ्युदयसाधनं
640 17 विधिनिषेधयो
641-10 शरीरप्राप्तिः
642-15 संसरज्जीव
22 मध्यस्यामवस्थायां
654-25 प्रदर्श्य
662-14 प्रामाणिकमिति
663-18 मूर्तामूर्तब्राह्मणमात्रं
664 30 षड्विधा
667- 3 त्वानुसंधानं

671-टी. 7 व्यङ्क्तुं
672-टी 12 शाण्डिल्य
676-टी 3 सिद्धान्त
677-टी 10 आहवनीय
679-11 क्रतुसाद्गुण्य
680-14 माजद्वै
683-टी. 6 उत्पत्तौ
684- 7 सप्राणानामिन्द्रि
9 मुपपादितम् ।
685-टी. 13 मयोपासना
686 टी. 7 सर्व साधारणा
10 कत्वमेवा
687-11 प्रियशिरस्त्वा
692-टी. 27 यत्र
697-टी. 20 स्तोत्रादि
698 टी. 13 उपरिफलाश्रव
700-टी. 2 विद्याङ्गत्वं
702-टी. 2 शाट्यायनि
704- 3 ज्यायस्त्वेन
17 पयुदासोवा
705 14 दुष्कृतसंक्रमणं
706-टी. 9 देहवियोगार्थ
10 साम्पराय
14 कौषीतकि
707-टी. 3 गतिश्रुतेः
708-टी. 11 तीत्यप्युच्येत
710-13 तेऽर्चिरभिसं
टी. 6 साधारणतया
711-टी. 17 नास्थूल
712- 4 तत्रसंशयः

712-30 सुसूक्ष्म
715- 1 अग्ने वेर्होत्रं
टी. 22 सामवेदे
717- 1 बृहदारण्यके
720-टी. 22 प्रक्रान्ते
721- ,, 13 युक्त्यन्तरेणैव
,, 14 अशनायाद्य
722-11 सैवहि
टी- 5 ह्यशनायाद्य
7 यच्छेकापरि
8 रन्यान्तेवासि
725-13 गुणविशिष्ट
726- 3 आयतनादिभ्यः
टी- 8 परस्य
727 ,, 2 विशिष्टस्योक्त
730 ,, 1 कम्, न च
,, 16 बन्धविनिर्मो
,, 19 तत्प्रत्यनीकत
732 , 6 औपनिषद्
,, 7 पासनस्य
735 ,,19 नारायण
736 ,, 4 पद्मकोश
7-8 ,, 9 षट्त्रिंशत्स
,, 17 श्रोत्रमयान्श्रोत्र
,, 21 यथायथं....न्ध्याधार
,, 25 सर्वव्यापार
739 ,, 1 स्थण्डिल
5 विद्यामय
,, 13 समुद्रसोमरस
740- 3 दिष्टुतिदिश्यते

टी. 8 संघातस्या
741-10 व्याहारो
741-टी. 14 चिन्वन्तीति, पुरुष
742 ,, 9 तदपेक्षा
743 ,, 9 श्रयते
744- 9 इत्यादिनो
टी. 2 वाक्यमल
749 ,, 8 जीवोपासन
12 तन्मतेपाठः
20 साधयितुम
750-12 उपासनस्य
,, भिन्नतच्छाखा
752-16 कुले
टी. 3 विराट्संपन्न
756 ,, 12 औपचारिक
757- 3 वैदुष्यानिश
,, 4 समुपजात
758 ,, 12 प्रायश्चित्ताना
,, 16 कामनासत्त्व
763- 8 एवं विद्धवै
,, 14 त्वासंभवात्
764 ,, 16 मृत्युजय
766 ,, 11 जैमिने
,, प्राक्तन
769-12 नाधिकरण्याय
770- 1 स्वर्गाद्यर्थे
772- 9 हेयप्रत्यनीका
टी. 1 तव्यताकाध्ययने
778 ,, 6 मुलंघ्यापि
779-10 अध्ययनशब्दो
781-10 जुह्वादीनां
783-टी. 11 यथाते, तथेमे
788- 7 कैमुतिक
790-11 मग्निहोत्रादीनां
791 1 तयाप्यनुष्ठेयानि
टी. 15 अविद्ययामृत्युं
792- 5 श्रुतौ स्मृतौ च
793- 2 यथोर्ध्वरे
,, टी. 11 आश्रमित्व
798 ,, 15 निर्णीतत्वात्
804 ,, 3 मौनसद्भावस्य
6 प्रवज्याप्रस्तावः
819.टी. 25 मूर्तत्वाभावात्
,, 26 चिन्त्यम्
821.टी. 7 एवंकुर्व
,, 28 उपासनारम्भ
822 ,, 20 प्रदास्यामि
829 ,, 19 संभावनापरि
835- 8 मनस्सम्पत्ति
840.13 आप्तकामः
844- 4 मूर्धन्ययैव
13 सदुत्क्रामति
टी. 13 संततत्वं
845 ,, 9 दित्यप्राप्ति
846-टी 8 कर्मशेषे
850-15 रश्मिभि
851-12 तत्प्रथितेः
851 ,, टी. 5 किमर्चिरादिरेक
854-टी. 2 संवत्सर
858-टी. 21 समाधानमिति
859.टी. 4 अप्रतीकालम्बन
863. ,, 3 प्रजापतिः
864. ,, 1 कार्याद्युपासका
,, 4 तदन्यप्रापक
866.टी. 5 पञ्चाग्नि
,, 8 दृष्ट्योपासनं
867 ,, . 7 मूलाषाढोत्तराषा-
ढामयी
20 न्मिश्रचिद्विषयकं
869.टी. 2 मप्यनभ्युपगम्य
871.टी. 16 नुकूलत्वेन
872. 4 संकुचितानां
873.30 ब्रह्मैवयमि
874.13 त्यौडुलोमिः
875. 1 तेनरूपेणा
12 मैत्रेयी
14 घनदृष्टान्त
16 देहाद्यन्तःस्थि
17 अबाह्यः
879.16 यजतिचोदना
884.टी. 10 मुक्तविषये
885.टी. 6 बद्धस्येव
886. 2 जगद्व्या
11 एष ह्येवा
15 एवाविर्भूतः
16 त्वमेवपरम
टी. 1 प्रतिबन्धक
2 मुक्तकर्तृक
5 तुरीये मोक्षश्च
11 इच्छातएव
892- 3 अर्चिरादिना 850
8 अविभागेन दृष्ट 872
22 अस्यैव चोपप 839
27 आतिवाहि 857

अनुभूतचरानेकमुद्रणालयदौःस्थ्यतः । शोधकस्यासहायत्वादप्यशुद्धिस्तु भूयसी ॥
कथञ्चिन्निरवर्त्यैतत् कार्यं तत्रेति तुष्यत । सन्तो गुणान् ग्रहीष्यन्ति किमन्यैर्दोषदर्शिभिः ॥

---

हेतुः सर्वान्तरात्मा भवतदितरभूम्थः स्वतन्त्वान्यशून्यो
निर्बाधः स्वप्रमाणक्षपितपरमतो व्योमकृच्चाक्षहेतुः ।
नीचोच्चस्थाननेता निरघगुणनिधिर्ध्येय इज्यार्थकर्मा
पापच्छित् त्याजिताङ्गो गतिकृदमृतदो ब्रह्मसूत्राब्धिमेयः ॥

जयतु यतिपतिश्रीलक्ष्मणार्यात्र्यमूक्तिः
जयतु निगमचूडादेशिकानर्घसूक्तिः ।
जयतु तदुभयास्वाद्यस्मदाचार्यपंक्तिः
जयतु तदभिगम्यः सन्निधिः श्रीनिधिर्नः ।

श्रीरस्तु ॥ शुभमस्तु ॥

श्रीः । श्रीनिवासपरब्रह्मणे नमः । श्रीभगवद्रामानुजाय नमः

# भूमिका

बहिरन्तरुदित्वरान्धकारप्रशमश्रौतयथार्थधीप्रकाशम् ।
भगवद्यतिराजलक्ष्मणाख्यं भुवि दिव्यं जयतीह धाम भव्यम् ॥

निगमजलधिवेलापूर्णचन्द्रस्य निखिलविद्यावाहिनीजन्मशैलस्य जनिपथपरिवृत्तिश्रान्तसर्वजनविश्रान्तिशाखिनः श्रीभगवद्रामानुजस्वामिपादस्य परमानुग्रहभूतं परं ज्योतिः श्रीभाष्यं यदि नाम जगति न प्रादुरभविष्यत्, निरन्तरप्रसृमर-निगमबाह्याभ्यन्तरविपर्ययरूप निरवधिकान्धकारपरीतमेव जगदशेषमभविष्यत् । तदिदं शारीरकमीमांसाभाष्यं प्रादुर्भावितवता श्रीभाष्यकृता सर्व एव श्रीवैष्णवाः तच्चरणारविन्दमकरन्दास्वादैकजीवनाः समये आज्ञापिषत, श्रीभाष्याध्ययनाध्यापनविधानमेव श्रीवैष्णवपरिग्राह्यं प्रथममनुज्ञाकैङ्कर्यमिति । यावदिदं भुवि चकास्ति, तावत् भगवान् श्रियःपतिः सपरिवारो नित्यविभूताविव निरपायं भोगमिहानुभवतीति सर्वं भगवन्मयं भ्राजेत । भगवदर्चामूर्तेः, श्रुतिस्मृतीतिहासपुराणरूपस्य तन्मूर्त्यन्तरस्य च पूजनादपि परमं श्रेय ऐहिकमामुष्मिकञ्च विश्राणयति श्रीभाष्यं सर्वसिद्धान्तग्रन्थशेखरभूतं भक्त्या गृहे संरक्ष्यमाणम्; सुतरां तु सेव्यमानं श्रूयमाणं श्राव्यमाणञ्चेति जन्मसाफल्यलिप्सुना जनिमता सश्रद्धमधिगन्तव्यम् ।

तस्यैतस्य श्रीभाष्यस्य सर्वासु दिक्षु प्रचारणीयस्य सर्वदेशदिशाकालेष्वव्याहतपराक्रमस्य सुप्रसिद्धया सर्वश्लाघ्यया महत्या व्याख्यया श्रुतप्रकाशिकया सह मुद्रणमधिकृत्य महति यत्ने क्रियमाणेऽपि, केवलं मूलं सर्वजनसेव्यं शीघ्रं प्रचारं प्रापणीयमिति परमया श्रद्धया प्रियतमेनान्तेवासिना श्रीपुष्करमठास्थानाधिकारभाजा औत्तरश्रीदेशिकभक्तवृन्दसेव्यमानेन श्री १००८ **श्रीधराचार्यस्वामि** महाशयेन प्रार्थितोऽहं यावदत्र व्यापृत आसम्—तावदिहाध्ययनपरैरनेकैरेवमावेदितोऽभूवम्—'एवं सुप्रसिद्धस्य सर्वसेव्यस्य श्रीभाष्यस्य यथावत् सर्वपङ्क्त्यर्थ सारव्युत्पादनेदम्परं तद्रसानुभवकुतूहलाभिवर्धकं सरलमेकं व्याख्यानं अध्येत्रध्यापकसर्वोपयोगि संक्षिप्तं नोपलभ्यत इति न्यूनता काचित् खलु वरीवर्ति, तां परिहृत्य सरलसंक्षिप्तसर्वादरणीयकिञ्चिद्व्याख्यानसहितमेव श्रीभाष्यमादौ मुद्रयित्वा प्रचारं प्रापणीयम्' इति ।

तदिदं भगवद्भागवताचार्यनियमनमिति मनसिकृत्य परमानुग्रहविधायिश्रीमदाचार्यपरम्परागोचरभक्तिप्रोत्साहितो भाष्यार्थदर्पणाभिधं व्याख्यानमिदं विधाय एतेन सह मुद्रयन्नस्मि । एतदर्थमद्य यावत् धनं प्रदायोपकृतवतां महतां नामानि प्रकाशितवानस्मि । प्रथमाध्यायः संप्रति प्रकाश्यते । द्वितीयसंपुटे संपूर्णं श्रीभाष्यमेतद्व्याख्यानसहितं विस्तृतभूमिकं वक्तव्यसर्वांशविशिष्टं प्रकाशयिष्यते मासचतुष्टयाभ्यन्तरे ।

तदस्मिन् सिद्धान्ते श्रद्धां वहन्तः सन्तः सम्यक् एतद्ग्रन्थप्रचारदत्तदृष्टयो भवन्तु । "गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयम्" इति श्रीमन्निगमान्तमहादेशिकैरेव यत्र वक्तव्यमासीत्, तत्रास्मादृशां भाष्यरत्नाकरवेलाप्रान्तमपि यथावदप्राप्तवतां कियती शक्तिः ? । अविज्ञातं विजानतां विज्ञातमविजानतामिदं श्रीभाष्यब्रह्म । अतो लब्धांशास्वादनेन लब्धव्यांशलिप्सातिशयेन चोपस्कृतात्मानः सत्समृद्धिपराः समुल्लसन्त्विति सर्वश्रेयःप्रदश्रीमन्नारायणचरणारविन्दनिध्यानपूतः प्रार्थये ॥ श्रीवैष्णवचरणशरणः

2-1?-63
25, नाथमुनि वीथिः, मद्रास्-17.

उत्तमूर्, ति. वीरराघवाचार्यः
उभयवेदान्त ग्रन्थमाला संपादकः

# शारीरके (1. अध्याये) औपनिषदविद्याः

| | | |
|---|---|---|
| (1) | सद्विद्या—ईक्षत्यधिकरणे | 1-1-5 |
| (2) | आनन्दमयविद्या—आनन्दमयाधिकरणे | 1-1-6 |
| (3) | उद्गीथहिरण्मयपुरुषदृष्टिः—अन्तरधिकरणे | 1-1-7 |
| (4) | उद्गीथाकाशदृष्टिः—आकाशाधिकरणे | 1-1-8 |
| (5) | प्रस्तावप्राणदृष्टिः—प्राणाधिकरणे | 1-1-9 |
| (6, 7) | गायत्रीविद्या—कौक्षेयज्योतिर्विद्या च ज्योतिरधिकरणे | 1-1-10 |
| (8) | प्रतर्दनविद्या—इन्द्रप्राणाधिकरणे | 1-1-11 |
| (9) | शाण्डिल्यविद्या—सर्वत्रप्रसिद्ध्यधिकरणे | 1-2-1 |
| (10) | नाचिकेतविद्या—अत्त्रधिकरणादौ | 1-2-2 ; 1-3-6 ; 1-4-1 |
| (11-12) | उपकोसलविद्या—अग्नित्रयविद्या च अन्तराधिकरणे | 1-2-3 |
| (13) | अन्तर्यामिविद्या (ब्राह्मणं)—अन्तर्याम्यधिकरणे | 1-2-4 |
| (14) | अक्षरविद्या—अदृश्यत्वादिगुणकाधिकरणादौ | 1-2-5 ; 1-3-1 ; 1-3-3 |
| (15) | वैश्वानरविद्या—वैश्वानराधिकरणे | 1-2-6 |
| (16) | भूमविद्या—भूमाधिकरणे | 1-3-2 |
| (13) | गार्ग्यक्षरविद्या—अक्षराधिकरणे | 1-3-3 ; 1-2-5 |
| (17) | त्रिमात्रप्रणवविद्या—ईक्षतिकर्माधिकरणे | 1-3-4 |
| (18) | दहरविद्या—दहराधिकरणे | 1-3-5 ; 1-3-10 |
| (19) | मधुविद्या—मध्वधिकरणे | 1-3-8 |
| (20-21) | संवर्गविद्या—सत्यकामविद्या च अपशूद्राधिकरणे | 1-3-9 |
| (22) | ज्योतिषांज्योतिर्विद्या—संख्योपसंग्रहाधिकरणे | 1-4-3 |
| (23) | बालाकिविद्या—जगद्वाचित्वाधिकरणे | 1-4-5 |
| (24) | मैत्रेयीविद्या—वाक्यान्वयाधिकरणे | 1-4-6 |

॥ श्रीरस्तु ॥

श्रीः

## शास्त्रावान्तरविभागः

मीमांसा विंशतिलक्षणी पूर्वमीमांसा उत्तरमीमांसा चेति भागद्वयरूपा। कर्मकाण्ड-सङ्कर्षकाण्ड-ब्रह्मकाण्डरूपा (त्रिकाण्डी।) (लक्षणं नाम-अध्यायः।) कर्मकाण्डरूपद्वादशलक्षणी-सङ्कर्षकाण्डरूप-चतुर्लक्षण्युभयात्मिका षोडशलक्षणी पूर्वमीमांसा जैमिनीया। उत्तरमीमांसा शारीरकनाम्नी ब्रह्मसूत्रापर-नामधेया चतुर्लक्षणी बादरायणीया।

तत्र—सिद्धद्विकं साध्यद्विकमिति पूर्वोत्तरद्विकभेदः; विषयद्विकं विषयिद्विकमिति च। १ प्रथमः समन्वयाध्यायः। २ द्वितीयः अविरोधाध्यायः। ३ तृतीयः साधनाध्यायः। ४ चतुर्थः फलाध्यायः। प्रथमे-प्रथमपादः अयोगव्यवच्छेदपादः, त्रिपादी अन्ययोगव्यवच्छेदात्मा।

| | | | | | | |
|---|---|---|---|---|---|---|
| 1-1. | अयोगव्यवच्छेदपादः | सूत्रसंख्या | 32 | अधि. सं. | 11 | (अक्ष) |
| 1-2. | अस्पष्टजीवादिलिङ्गकपादः | ,, | 33 | ,, | 6 | (ऊर्मि) |
| 1-3. | स्पष्टजीवादिलिङ्गकपादः | ,, | 44 | ,, | 10 | (आशा) |
| 1-4. | स्पष्टतरजीवादिलिङ्गकपादः | ,, | 29 | ,, | 8 | (अहि) |
| 2-1. | स्मृतिपादः | ,, | 36 | ,, | 10 | (काष्ठा) |
| 2-2. | तर्कपादः | ,, | 42 | ,, | 8 | (द्विरद) |
| 2-3. | वियत्पादः | ,, | 52 | ,, | 7 | (मुनि) |
| 2-4. | प्राणपादः | ,, | 19 | ,, | 8 | (वसु) |
| 3-1. | वैराग्यपादः | ,, | 27 | ,, | 6 | (ऊर्मि) |
| 3-2. | उभयलिङ्गपादः | ,, | 40 | ,, | 8 | (अद्रि) |
| 3-3. | गुणोपसंहारपादः | ,, | 64 | ,, | 26 | (तत्त्व) |
| 3-4. | अङ्गपादः | ,, | 51 | ,, | 15 | (अतिशक्करी) |
| 4-1. | आवृत्तिपादः | ,, | 19 | ,, | 11 | (अक्ष) |
| 4-2. | उत्क्रान्तिपादः | ,, | 20 | ,, | 11 | ,, |
| 4-3. | गतिपादः | ,, | 15 | ,, | 5 | (प्रयाज) |
| 4-4. | फलपादः (मुक्तिपादः) | ,, | 22 | ,, | ६ | (रस) |

"सौत्री संख्या शुभाशीः अधिकृतिगणना चिन्मयी ब्रह्मकाण्डे" सू. सं. 545. अ. सं. 156.

द्वात्रिंशच्च त्रयस्त्रिंशत् चत्वारिंशत् चतुर्युता।
एकोनत्रिंशदेवाथ षट्त्रिंशत् षड्युता च सा॥
द्विपञ्चाशत् अथैकोनविंशतिः सप्तविंशतिः।
चत्वारिंशत् चतुष्षष्टिः एकपञ्चाशदप्यथ॥
एकोना विंशतिः पूर्णाऽप्यथ पञ्चदशान्ततः।
द्वाविंशतिर्ब्रह्मसूत्रपादसूत्राणि नः क्रमात्॥

# शोधनिका

5-26. आभिधानिक
8- 2. तव्यप्रत्ययः
10- 4. प्रोष्ठपद्यां
26-19. वस्तुज्ञानविषयस्व
43- 7. उत्पत्तीत्यादि **क्षयादय** इत्यन्तं **प्रमाणं ज्ञान**मित्येतदनन्तरं पाठ्यम्, मूलानुसारात्
5C-16. विषाणायते
52- 6 क्वचित्
54-23 जातिरूपाकृतिवादिनो जातेः
71-13. अन्तर्ज्योति
77- 3. स्यात्
83-29 इत्यत्राह
85-14 स्वपक्षसाधन
116- 9 त्यभ्युपगम्य
132- 8. नाप्य
136- 9. निष्क्रान्ततया
139- 3, सत्यम्,
144-23 समवस्थितम्
,, ,, यथाजातं
151-19. तदुभयानर्हमम्
158- 9. चिदचिद्वस्तु
172-29. माभू
173-16. इत्याशयेनाह
184-10. साक्षात्कारसाम
189-24. अदृश्यमंतति
192-12. कार्यत्वञ्च, 'अनु इ....दनम्'
314-17. फलस्याङ्गेऽप्या
319-21. यथेषीका
322-23 योगार्था
324-21. परमात्मपरोऽयं
25. पादाधिकरणेष्विवा
326-14. शंक्यते
328- 5 **संशब्दनात् प्राक्प्रकरणस्या**
329- 8. **धिकतया**
331-25. सुखरूपस्य
341-15. निबन्धनः
351-22 प्रतिज्ञाखण्डेन
364-27. जन्यत्व
368-20. विष्णु पुराणे
390- 7. शब्देन
406-24. पर्वंहित

श्रीः

# भूमिका

1. अस्तु श्रियै विरिञ्चेड्यमाद्यं विद्याधिदैवतम् । मुमुक्षाहेतुभव्येक्षं महो लक्ष्मीहयाननम् ॥

2. अमृतमनुपमं यन्नित्यमास्वाद्यमेतत् प्रतिपदमुपभोग्यं भ्राजते यत्र भाष्ये ।
प्रणववपुषि सर्वाम्नायसारे, तदेतत् यदवधि भुवि तावत् भावुकं सार्वभौमम् ॥

3. श्रीमन्नारायणमक्कृतकैर्वाङ्मयैर्धर्मतत्त्वव्याख्यामिश्रं स्मृतिभिरुदितं कृत्स्नमीमांसया च ।
प्राप्यं योऽसौ भजनमुखतः सामरस्यादकम्प्यं श्रीभाष्येण प्रथयति जयत्येष रामानुजार्यः ॥

**उभयवेदान्तग्रन्थमाला**मुखेनास्माभिः प्रकाश्यमानेषु प्रबन्धरत्नेषु बहुविधग्रन्थप्रकाशनात् पश्चात् क्रियमाणमपीदं श्रीभाष्यप्रकाशनं प्रथमकर्तव्यत्वेनैव प्राज्ञाः परिचिन्तयेयुः । आदिष्टश्चाभवं प्रथमकैङ्कर्यमिदमिति प्रारम्भसमय एवास्मदाचार्यचरणैरनुग्रहवचनामृतधारासेचनेन श्रीपरमहंसपरिव्राजकै बहुग्रन्थनिर्माणालङ्कर्मीणैः प्रख्यातगुणाचारैस्तृतीय**श्रीरङ्गरामानुजमहादेशिकैः** । अथाप्येतदुपोद्घातरूपेणैवोपनिषन्मुद्रणं कृत्स्नं कर्तव्यमासीत् । अन्यानि तु परमार्थभूषणादीनि अवश्यसमापतितरचनमुद्रणानि अन्तराले प्राकाश्यं प्रापिषतेति भाव्यम् । सर्वोपजीव्यसुप्रसिद्धश्रुतप्रकाशिकासहितश्रीभाष्यमुद्रणमप्याप्याशासानेनैव मया संप्रति प्रकाश्यमानेऽस्मिन् भाष्यार्थदर्पणे श्रीभाष्यव्याख्याने—सूत्राणां श्रीभाष्यसूक्तीनाञ्च विवक्षितार्थवैशद्यं पूर्वोत्तरसांगत्यं पदस्वारस्यम् अधिकरणसंगतिः पौनरुक्त्यपरिहारः उदाहृतवाक्यस्वरूपतदर्थपरिस्थितिः परमतानुवादतत्खण्डनविषयविवेकः तत्तत्र विशेषविचारश्चेत्येवम्भूतेष्वर्थेषु यथामति संग्रहणाविरोधेन वैयग्र्यं वहता सदाचार्यकटाक्षफलमिति मत्वा यद्यत् प्राच्यग्रन्थापरिदृष्टमपि तत्रत्यत्वेनास्मृतमपि समुल्लिखितमस्ति, तत्र सहृदयाः सन्तो गुणांशमाद्रियेरन्, अनुपपन्नञ्च भ्रान्तेः पुरुषधर्मत्वादुपेक्षेरन्निति विश्वसिमि । सर्वथा कथञ्चिदुपकारेण कृतेन परितुष्यन् परमकारुणिकः परमनुग्रहीष्यतीति च मे संप्रत्ययः । व्याख्यानस्यैतावान् विस्तर आरम्भेऽनध्यवसितोऽपि क्रमादवशादापततिस्म ।

4. व्याख्यातमासीदिति यत्र बुद्धम्, वक्तव्यमस्तीति च धीरिहैति ।
विस्रष्टुमीषन्मनसो नियोगे तद्विस्तरे लम्भयते पदं तत् ॥

5. ग्रन्थान्तरेष्वार्यवरैर्मया वा व्युत्पादितानामनुवादमुज्झन् ।
परं च संक्षिप्य यथावबोधं स्वरूपयं सारविदः प्रमाणम् ॥

6. न्यूनता सहजा व्याख्यास्वयुक्तिर्यदि, सह्यताम् ।
आर्जवेनाऽर्थजिज्ञासोराग्रहो नावकल्पते ॥ **एतन्मुद्रणद्रविणोपकारलाभ एवम्—**

आदावुत्तरदेशश्रीपुष्करक्षेत्रविराजमान-श्रीमदुत्तराहोबिलझालरियापीठयुवराज-१००८ श्रीयुक्तस्वामि**श्रीधरचार्याणा**मस्मदन्तेवासिनां नियोगेन दिव्यभव्यपरश्शतकैङ्कर्यपरायण-कल्कत्ताबांगड**श्रीगोविन्द-(बाबु)**श्रेष्ठिमहोदयवितीर्णं रूप्यकपञ्चसहस्रीपरिमितमेव धनमाधारं विधायोपक्रम्य मद्रनगर**श्रीकैरविणी-**

**क्षेत्रस्थभारतीविजयमुद्रालये** चतुःसूत्रीपर्यन्तं मुद्रणं निरवर्ति। अथ तत्र तत्परिगृहीतचरानेककार्यव्यग्रतया विलम्बमवश्यम्भाविनमध्यवसाय श्रीमान् रायप्पेट्ट **श्रीवत्समुद्रालयाधिकार्येव** अस्माकमत्यन्तपरिचितः पूर्वमस्मदनेकग्रन्थमुद्रयिता **श्री H. S. रामस्वामि ऐयङ्गार** महाशयः एतदर्थे ज्ञापितः, श्रीभाष्यगौरवमपि पुरस्कृत्य इहोत्सहते स्म। परन्तु मुद्राक्षराणामपर्याप्त्या कच्यता चिन्तिता चिन्तामजीजनत्। समनन्तरमेव श्रीभाष्यकृतो नियोगेनेव महानुभावेन भव्यगुणशेवधिना परमोदारेण **श्रीमता N. R. श्रीनिवासाचार्येण** अस्मत्निकटे श्रीभाष्यमधीयानेन स्वयमेकं सहस्रं स्वभागिनेय-हिन्दुपत्रमुद्रणाधिकारि-**श्रीकस्तूरिमहोदय**मुखेन चान्यत् सहस्रमर्पयित्वा मुद्राक्षरग्रहणपूर्वकं मुद्रणं पुनरारम्भितमिति कृतज्ञेन मया कथङ्कारमत्रानुक्तवता भूयेत। अथ परमास्तिकाः स्वयमेव शतंशतं केचिददुः। तावत् विषयमिमं वेदिताः बडोदाचान्दोद**धर्मचक्रोदयमठाधिपतयः** १००८ **श्रीयुताः अनिरुद्धाचार्या** अपि स्वयमस्मदन्तेवासित्वबुद्ध्या श्रीभाष्यगौरवेण च प्रेरिताः परममौदार्यमेकसहस्रप्रेषणेनाऽऽविरकार्षुः। तदेवं प्रथमाध्याये सव्याख्ये मुद्रिते शोभकृन्मकरस्वातिनक्षत्रे च तत्प्रकाशे अध्यवसिते, अहो भाग्यम्—यत् श्रीमल्लक्ष्मीनृसिंहास्थाने ४४ पट्टेऽभिषिक्ताः श्रीमद्वेदमार्गप्रतिष्ठापनाचार्यपरमहंसपरिव्राजकाचार्याः श्रीभाष्यप्रचरणार्थं बहुविधकार्यकृतः स्वयमेतत्संग्रहकारिकाकर्तारश्च १००८ श्रीयुत **श्रीवण्शठकोप-श्रीवेदान्तदेशिकयतीन्द्रमहादेशिकाः** प्रागेव (वैशेषिकरसायनस्येव) परमार्थभूषणग्रन्थस्य मुद्रणाय रूप्यकपञ्चसहस्रीमनुगृहीतवन्तः परमोदाराः तदात्वे मद्रनगरे कृतविजयाः प्रथमभागस्यास्य मैलापुर श्रीदेशिकसंनिधौ श्री श्रीनिवासदेवालये महति संमेलने सादरं प्रकटनमभ्युपागमन्। अस्मद्गुरूनपि प्रशस्य प्रकटयन्तश्चेमे विदुषोऽविदुषः सर्वानप्येतद्ग्रन्थक्रयणे प्रेरयन्तः स्वयं पञ्चाशत्पुस्तकग्रहणं प्रतिज्ञातवन्तस्तदर्थे रूप्यकसहस्रमप्यन्वगृह्णन्। पुनरप्येकं सहस्रं परमास्तिकेन कल्कत्ताश्रेष्ठिमहोदयेन प्रागुक्तेनार्पितम्। तदेवं श्रीभाष्यरसास्वादित्रिविधमठाधिपतिप्रभृतिपरमास्तिकप्रोत्साहितं मां व्याजीकृत्य सर्वनियन्त्रा श्रियः पत्या साम्प्रतं संपूर्णं कथमपि निरवर्ति। एवमुपकृतवद्भ्यो महनीयेभ्यः कृतज्ञतां प्रकटयन्, ईदृशेषु सत्कार्येषु मादृशप्रवृत्तेरीदृशमहनीयमहाजनश्रद्धैव हेतुरद्धेति विनिवेदयामि। अत्रोपकृतवतां सर्वेषां नामधेयानि पृथक्पट्टिकायां प्रदर्शितानि द्रष्टव्यानि।

**अथ विषयः**—सत्स्वपि बहुषु शारीरकमीमांसाभाष्येषु भाष्यमिदमेव श्रीभाष्यमिति प्रथते, भगवद्रामानुजस्वामिपादा एव च भाष्यकारपदेन निरूढव्यवहारा इत्येतावताऽप्यस्य भूमा सुग्रहः। वैदिकमतेषु शाङ्करमेकं विना सर्वाण्यन्यानि अद्वैतपराणि द्वैतपराणि च जगत्सत्यत्वमेवाऽऽतिष्ठन्ते। श्रीशङ्कराचार्याः परं शून्यवादिनो बौद्धान् ब्रह्म परमङ्गीकारयितुं तदादृतजगन्मिथ्यात्वे स्थित्वैव तत् साधयितुं प्रवृत्ताः तदनुगुणमेव ग्रन्थान् जग्रन्थुः। बह्वंशविवादे सति वादिनां वशीकरणाय कतिपयांशाभ्युपगमान्वारोहेण प्रधानत्वेन स्वस्वाभिमतस्यार्थस्य स्थापने नैर्भर्यमपि प्राचां कश्चित् पन्थाः; अत एव जैमिनिः अवैदिकसंमतं देवताभावपक्षमभ्युपगम्यैव वैदिककर्मणां प्रामाणिकत्वं प्रतिष्ठापयामास। शांकरवत् भास्करीयं यादवप्रकाशीयञ्चेति अद्वैतमतद्वयमप्यत्र श्रीभाष्ये खण्ड्यते। तस्मिन् मतद्वयेऽपि जगतः

सत्यत्वमेव । महोपनिषदादिकं प्रमाणीकृत्य नारायणपारम्यं यादवप्रकाशस्थापितमिति श्रीमन्निगमान्तमहादेशिकनिर्मितात् सच्चरित्ररक्षाग्रन्थादवगम्यते । भास्करस्त्रिदण्डिसंन्यासीति मनुस्मृतिकुल्लूकभट्टव्याख्यानतो बुध्यते। परं तयोर्मतयोः सांप्रतं न प्रचारः । तथा सांख्यमतानुसारिणो विज्ञानभिक्षोर्भाष्यस्यापि। उत्तरदेशे श्रीवल्लभाचार्यमतं श्रीनिम्बार्कमतञ्च देशभेदेन लब्धप्रचारमस्ति । शारीरकस्य भाष्यमिवान्येऽपि बहवो ग्रन्थाः स्वमतसंरक्षणाय तदीयैः कृताः समुल्लसन्ति। अस्त्यन्योऽपि चैतन्यसंप्रदायः। परंतु तत्र सूत्रभाष्यादि नोपलभ्यते । तन्मतस्थाः भगवद्भक्तिभरितान्तरङ्गाः अनुभवैकतानाः मन्ये नाधिकं वादकेलिषु व्याप्रियन्ते । एवं निर्दिष्टमतस्थाः सर्वेऽप्येते महावैष्णवाः शैवसमयविध्वंसनबद्धपरिकराश्चेति ग्रन्थत एव विशदम् । इमे सर्वे श्रीवल्लभाचार्यादयः श्रीभगवद्रामानुजापेक्षयाऽर्वाचीनाः तत्रतत्र तत्पद्धतिमनुसरन्तश्च लक्ष्यन्ते विष्णुपारम्ये। आनन्दतीर्थीयस्य द्वैतमतस्यान्यपूर्वभाविनोऽपि स्वपाश्चात्यत्वादेव सांख्यतार्किकद्वैतसरणेरिवैतत्सरणेः परीक्षणं कण्ठतः कर्तुं श्रीभाष्यादिग्रन्थो न प्रसक्तिमलभत। एषां सर्वेषां वैष्णवमतत्वेऽपि श्रीवैष्णवमतत्वेन श्रीभाष्यनिर्माणनिरूढप्रकर्षभाष्यकारमतमेव प्रथत इति सर्वजनसंप्रतिपन्नोऽयमर्थः। एवं सत्स्वपि मतेषु अस्मद्देशेऽस्मिन् दक्षिणभारते द्वैतस्याद्वैतस्य चैव प्रचारदर्शनात्. तन्मतद्वयमनुरुध्य शारीरकार्थं संप्रति संजिघृक्षामि। भगवद्रामानुजमुनिसार्वभौमैरेव वेदान्तदीपे श्रीभाष्यनिर्माणानन्तरं कृते शारीरकव्याख्याने शारीरकाध्यायपादार्थाः संग्रहेण सम्यक् व्युत्पादिताः सन्ति, अत्रापि पुटान्तरे तत्संग्रहः कृतोऽस्तीति अत्र मतद्वयानुसारेण परं शारीरकार्थसंग्रहः क्रियते ।

| | अद्वैते | द्वैते |
|---|---|---|
| शारीरके प्रथमेऽध्याये प्रथमे पादे— | | (स्पष्टास्पष्टब्रह्मलिङ्गत्वादिरूपो |
| 1. | जगत्कारणं ब्रह्मेति निरूप्य अर्थान्तरप्रसिद्धा अपि शब्दाः स्पष्टब्रह्मलिङ्गसद्भावात् ब्रह्मपरत्वेन निर्णीयन्ते । | विभागो नेष्यते) नामसमन्वयः —अन्यत्र प्रसिद्धपदानामपि समन्वयः । |
| | अस्पष्टब्रह्मलिङ्गकवाक्यविचारो द्वितीये तृतीये च । | |
| 2. | तत्र द्वितीये सविशेषब्रह्मलिङ्गनिरूपणम्-योगाख्यशक्तिमत्पदविचार इति वा । | लिङ्गानां—अन्यत्र प्रसिद्धानां वाक्यानां समन्वयः |
| 3. | तृतीये निर्विशेषब्रह्मलिङ्गनिरूपणम ; रूढिशक्तिमत्पदविविचारो वा । | उभयत्र प्रसिद्धलिङ्ग(वाक्य) समन्वयः । |
| 4. | कारणत्वस्य प्रधानादौ व्यभिचारादलक्षणत्वशंकापरिहारः । | अन्यपरत्वाभावेऽनुपपन्नत्वेन सम्यग्बुध्यमानानां शब्दानामपि समन्वयः । |
| द्वितीयेऽध्याये—1. | ब्रह्मणः कारणत्वे स्मृतिन्यायविरोधपरिहारः । | युक्त्यविरोधः । |
| 2. | प्रधानादिवादानां न्यायाभासोपबृंहितत्वम् । | समयाविरोधः —विरुद्धसमयनिराकरणम् । |

| | | अद्वैते | द्वैते |
|---|---|---|---|
| | 3. | श्रुतिविप्रतिषेधपरिहारे—मानान्तरानुगुणश्रुत्युपष्टम्भेन भूतभोक्तृविषयकश्रुतिविरोधपरिहारः । | युक्तिसहितश्रुत्यविरोधः ; अथवा अधिभूताधिदैवतश्रुतिविरोधपरिहारः । |
| | 4. | भौतिकविषयश्रुतिविप्रतिषेधपरिहार इति स्यात् ; वायुविकारत्वात् प्राणस्य ; तन्मते इन्द्रियाणां भौतिकत्वञ्च । प्रकृतिकार्यमहदाद्यभावः, 'इतरेषाञ्चानुपलब्धेः' इति सूत्रे शाङ्करभाष्यादावुक्तः । | अध्यात्मव्यतिरिक्तविचारः (अधिभूतादिविचारः) प्राक् वृत्तः । अध्यात्मविचार इह । |
| ,, तृतीयेऽध्याये— | 1. | संसारगतिभेदप्रदर्शनं वैराग्यहेतोः । | मुक्तिसाधनानि मुमुक्षुनिष्ठानि चत्वारि तत्र प्रथमस्य वैराग्यस्य संपादनमिह । |
| | 2. | त्वम्पदतत्पदार्थविवेको महावाक्यार्थनिर्णयाय । | माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपभक्तिवर्धनम् । |
| | 3. | सगुणविषयकविज्ञानभेदाभेदचिन्ता । | तारतम्योपेतोपासन निरूपणम् । |
| | 4. | इतिकर्तव्यतानिरूपणम् । | उपासनजन्यापरोक्षज्ञानरूपसाधननिरूपणम् । |
| ,, चतुर्थेऽध्याये— | 1. | निर्गुणविद्याफलैकदेशरूपबन्धनिवृत्तिकथनम् --पूर्वोत्तरकर्मविनाशाश्लेषौ । | कर्मक्षयः । |
| | 2. | अपरविद्यानिष्ठस्योत्क्रान्तिः । | उत्क्रान्तिः । |
| | 3. | सगुणविद्याकार्यार्चिरादिगतिः । | अर्चिरादिमार्गः । |
| | 4. | द्विविधविद्याफलम् । | भोगरूपं फलम् । |

एवं स्थूलनिरीक्षणे, अद्वैते सगुणनिर्गुणभेदकल्पनं द्वैते उपासनानन्तरभवात् तद्विश्वादपरोक्षज्ञानान्मुक्तिरित्येतदंशव्यतिरिक्तांशेषु प्रायः पादार्थानां द्वैताद्वैतविशिष्टाद्वैतमतेष्वैकरूप्यमेव सुवचम् ; केवलं वाचकशब्दराशिर्भिद्यत इति । अथापि अधिकरणनिरूपणभंगी अधिकरणभेदकल्पनेत्यादि बहुलं भिद्यत एव । द्वैतिनस्तु प्रायो विषयवाक्यमप्यन्यान्यन्निर्दिशन्ति । सुप्रसिद्धसर्वप्राच्यस्वीकृताभ्यस्यमानोपनिषदादिगतान्येव वाक्यानि गृहीत्वा स्वमतं व्युत्पादनीयमिति निर्बन्धं विना स्वमात्रविदिता बहवो ग्रन्थाः तन्मतप्रवर्तकाचार्यैरुदाहृता । पूर्वापरसंदर्भाज्ञानात् परैरिव तच्छिष्यैरपि तदर्थशोधनं तत एव दुष्करम् । एवं स्वमतप्रक्रियां परविलक्षणां तत्रतत्र स्वयमुपन्यस्यमानां स्थापयितुं तैरुदाह्रियमाणानि ब्रह्मतर्कादिगतत्वेनोच्यमानानि प्रवर्तकाचार्यवाक्यसच्छायान्येव लक्ष्यमाणानि वाक्यानि तद्वाक्यवदेव स्वयमप्रमाणत्वेन चेत् परे मन्येरन्, तदा न कश्चित् परेषां क्लेशः । अन्यदा तु परैः स्वस्वाभिमतसिद्धान्तमनुरुध्य निर्वाहे प्रयास एव । यादृशं सिद्धान्तमवष्टभ्य शारीरकमद्वैतिभिर्द्वैतिभिर्वा व्याख्यातम्, तादृशस्य तस्य

प्रमेयमिह संग्रह्य प्रदर्शयेम, तेन शांकराद्वैतस्याद्वैतान्तरेभ्यः माध्वद्वैतस्य च सांख्यादिद्वैततो भेदः सुग्रहो भवेत्। तत्र शांकरस्य श्रीभाष्यादित एव स्पष्टत्वादतीव संग्रहो भङ्ग्या कयाचित् क्रियते। माध्वमतं तु मनाक् विस्तरेण वर्ण्यते।

## शांकराऽद्वैतम्

निर्विशेषं ब्रह्मैकमेव सत्यम्। जगन्मिथ्या। यद् वस्तुतोऽसत् बुद्ध्या गृह्यते, तन्मिथ्या; यथा शुक्तिरजतम्; यथा च स्वप्ने वस्तुजातम्। यथावस्थितबोधोदयं यावत् तद्विषयव्यवहाराः प्रचलन्ति। तत्र शुक्तिरजतस्य मिथ्यात्वेऽपि तदनुबन्धिनः समीहादिरूपा व्यवहाराः न तद्वन्मिथ्याभूताः। स्वाप्निकभक्षणविहरणादिव्यवहारास्तु स्वाप्नपदार्थवदेवासत्याः; एकरूपदोषमूलकत्वात्। तद्वत् ब्रह्मणि कल्पितं जगदिव तदनुबन्धिव्यवहारा अपि मिथ्याभूता एव; एकाऽविद्यारूपदोषमूलकत्वात्। तत्र शुक्तिरजतस्वाप्नपदार्थहेतुभूतदोषस्य तद्विलक्षणसत्यत्वेऽप्यस्या अविद्यायाः न जगद्विलक्षणसत्यत्वम्; तथासति द्वैतापत्तेः। अतः साऽपि मिथ्या; अथ च सा अनादिः; अन्यथा अविद्योत्पत्तेः प्राक् ब्रह्मणो मुक्तत्वापत्तेः; कारणाभावादविद्याया अयोगप्रसंगाच्च। प्रवाहानादिभूताविद्यापरम्परया बन्धानादित्वमेव शांकरभाष्येष्टमिति वादस्य यद्यवसरः स्यात्, तदा जीवानामप्यनादित्वं प्रावाहिकमेव स्यादिति अकृताभ्यागम-कृतविप्रणाशमुक्त्यर्थप्रवृत्त्यभावादिकमापद्यते, बौद्धाविशेषश्चेति मिथ्याभूतानामपि केषाञ्चिदनादित्वं स्वीकृत्यैवाद्वैतं तैः समर्थ्यते। ते च षट्—

"1. जीव 2. ईशो 3. विशुद्धा चित् 4. तथा जीवेशयोर्भिदा।
5. अविद्या 6. तच्चितोर्योगः षडस्माकमनादयः॥"

इति गणिताः। एवमनादिषूक्तेषु, पञ्चानां मिथ्यात्वात् ब्रह्मतत्त्वज्ञाननिवर्त्यत्वमस्तीति तन्निवृत्तौ ब्रह्मैकमेव शिष्यते। सैव मुक्तिः। यद्यपि सर्वस्यास्यानिवृत्तावपि ब्रह्मणो न बन्धः, परमार्थतः कस्याप्यन्यस्याभावादेव तस्य नित्यमुक्तत्वात्। न च सांसारिकदुःखानुभवस्यैवमेवानुवृत्तौ कथं मुक्तत्वमिति शंक्यम्—अस्यानुभवस्यापि मिथ्यात्वेन वस्तुतस्तदभावस्याक्षतेः—अथापि वास्तवबन्धस्याभावो मुक्तिरिति नोच्यते; प्रतियोग्यप्रसिद्धेः। अपारमार्थिकस्यैव बन्धस्य निवृत्तिरेव मुक्तिः।

सा च 'नेह नानास्ति किञ्चन', 'अहं ब्रह्माऽस्मि' इत्येवम्भूताऽद्वितीयात्मज्ञान-ब्रह्मात्मैक्यज्ञानादिव्यपदेशभाजः वाक्यजन्यात् वाक्यजज्ञानसंस्कृतमनोजन्याद्वा शुद्धब्रह्मसाक्षात्कारात्मकतत्त्वज्ञानात् भवतीति, यदा यत्र देशे तज्ज्ञानोदयः तदा तद्देश एव मुक्तिः। अर्चिरादिगत्यादिश्रवणं तु कार्यब्रह्मप्राप्त्यर्थम्। 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे' इति वचनात् कार्यं गतानां कार्येण ब्रह्मणा सह तत्र मुक्तिः। तत्प्राप्तिहेतुरुपासनञ्च, नाम ब्रह्मेत्युपासीतेत्येवं विहित प्रतीकालम्बनोपासनव्यतिरिक्तम्। कार्यचतुर्मुखलोकप्राप्तेः, 'प्रजापतेः सभां वेश्म प्रपद्ये' इति श्रुतितोऽवगमात् तदुपासनमेव तत्प्राप्तिहेतुरिति न; चतुर्मुखविलक्षणस्यैव सर्वजगत्कारणतायाः स्वीकृतत्वेन कारणविषयकसत्यकामत्वादिविचित्रगुणविशिष्टोपासनानामपि मार्गान्तरानिर्देशेन कार्यब्रह्मलोकप्राप्तेर्वक्तव्यत्वात्। अपरब्रह्मोपासनं विना परब्रह्मोपासने क्रियमाणेऽपि त्रिमात्रोंकारालम्बनत्वादुपासनस्य न निर्विशेषोपासनत्वमिति तेनार्चिरादिप्राप्तिः क्रममुक्तिश्च,

ईक्षतिकर्मव्यपदेशाधिकरणे तैरुक्ता । एवञ्च मुख्यमुक्तिहेतुभूताखण्डब्रह्मसाक्षात्कारमिहैव संपादयितुमसमर्था एव लोके प्राय इति ईदृशानां सगुणब्रह्मज्ञानविधान्तर्गतात् यस्मात् कस्माच्चिद् विज्ञानात् अमानवप्रापणीयसत्यलोकप्राप्तौ तत्र समये तत्त्वसाक्षात्कारोदयान्मुक्तिरिति ।

इदञ्च मतम्—जगद्भ्रमहेतुभूतत्वेन तदभिन्नताऽविद्यारूपदोषादेर्मिथ्याभूतस्यैवानादित्वम्, मिथ्याभूता अपि पदार्थाः उत्पद्यन्ते, सन्ति च कञ्चित् कालम्, तत्त्वज्ञानान्निवर्तन्ते चेत्यादिकं च यावत् यथावन्नोपपाद्यते, तावन्न प्रतितिष्ठति । भट्टकुमारिलनयेन प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरूपप्रमाणषट्कस्वीकारिण एते । परन्तु प्रत्यक्षज्ञानोत्पत्तिप्रकारं तदुपपादितरीत्या सर्वथा नेच्छन्ति; किं तु सांख्यच्छायामाश्रयन्त इति वेदान्तपरिभाषायां विशदं द्रष्टव्यम् । को नाम जीवः, स किमेकोऽनेको वा, जीवस्य ईश्वरस्य ब्रह्मणश्चैकत्वे मिथो भेदकाकाराः के, जगतः कल्पितत्वे च किं जीवकल्पनाविषयत्वम् उतेश्वरकल्पितत्वम्, ईश्वरकल्पितत्वे च कथं जीवैरनुभूयमानता, तत्तज्जीवकल्पितत्वे च कथं जगत एकत्वम्, मिथः संवादश्च कथम् एककल्पितस्य शुक्तिरजतस्यान्येनादर्शनात्, ईश्वरसृष्टत्वञ्च जगतः किंरूपम्, तत्र सृष्टिक्रमनियमः कश्चिदस्ति न वा, ईश्वरेणापि मुक्त्यर्थं प्रयत्नः कार्यो न वा, आनन्दमग्नस्य किमिति शुद्धमुक्त्यपेक्षेत्यादिकमप्यत्र अविद्यातत्संबन्धादिवत् सुबहु विचार्यम् । सर्वत्र श्रुतिवचनरूपप्रमाणगवेषणमपि कार्यमिति तत्र प्रवृत्तानां पारप्राप्तिर्न सुलभा । एवं नवीनरीत्या शोधनविस्तरोऽप्यस्मत्कृतेष्वेव बहुषु ग्रन्थेषु द्रष्टव्यः ।

अथ **माध्वद्वैतम्** । अद्वैतनिरसनधुरन्धरैः श्रीमदानन्दतीर्थीयैर्विष्णुभक्तैः निर्दोषनिखिलकल्याणपूर्णविष्ण्वतिरिक्तब्रह्मानङ्गीकारिभिर्यादृशं द्वैतं स्वीकृतमस्ति, तद्वैशद्यानुगुणं तत्संमतप्रमेयसंग्रहः क्रियते । इमे विशिष्टाद्वैतिन इव प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयवादिनः । प्रमेयनिरूपणेऽपि एतत्सादृश्यं बहुलमस्ति; बहुलं वैसादृश्यमपि । स्वतन्त्रास्वतन्त्ररूपेण वा ईश्वरानीश्वररूपेण वा द्विविधः पदार्थः । प्रथमो विष्णुः निर्दोषोऽनन्तकल्याणगुणपूर्णः सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षरूपकार्याष्टककर्ता परममुख्यया वृत्त्या सर्वशब्दवाच्यः सर्वव्यापी ज्ञानानन्दरूपः । परममुख्यत्वञ्च निरवधिकत्वानन्याधीनत्वान्यतरविशिष्टतयैव स्वरसतः प्रवृत्तिनिमित्तधर्मभानात् । यदेन्द्रादिशब्दार्थ ऐश्वर्यं भगवति विवक्ष्यते, तदैतत् । शचीपत्यादौ तु तत् सावधिकमन्याधीनञ्च । परमात्मभिन्ना तद्भार्या तन्मात्राधीना लक्ष्मीः तद्वदेव नित्यमुक्ता सर्वशब्दवाच्या, कालतो देशतश्च सर्वव्यापिनी च । परमात्मनः किञ्चिदूनत्वात् गुणतो व्याप्तिः सर्वकल्याणगुणपूर्णतारूपा नास्ति । सेयं जीवकोट्यनन्तर्भूता प्रकृत्यभिमानिनी ।

संसारयोग्यत्वं जीवत्वम् । संसारिता चानादितयैवाज्ञानादिदोषयुक्तत्वात् ।

त इमे, जीवाः लक्ष्मीवदेव परमात्मनोऽत्यन्तभिन्नाः; असंख्याकाः इमे त्रिविधाः-मुक्तियोग्याः नित्यसंसारिणः तमोयोग्याश्चेति । मुक्तियोग्यान् देव-ऋषि-पितृ-चक्रवर्ति-मनुष्योत्तमभेदेन पञ्चधा विभजन्ति । मनुष्योत्तमपदं ऋषिचक्रवर्तिभिन्नपरमात्मोपासकमनुष्यपरम् । मध्यममनुष्याः स्वर्गभूमिनरक-

सञ्चारिणः सर्वदा सृष्टौ सुखदुःखानुभवमग्ना एव वर्तन्ते । तमोयोग्याः परमात्मद्वेषिणः स्वर्गानुभवरहिताः द्वेषपरिपाकवशात् क्रमेणान्धतमसे निमज्जन्ति ।

ईशः, जीवः, जडमित्येषां त्रयाणां मिथोऽत्यन्तभेदस्य, तथा जीवस्य जीवान्तरादत्यन्तभेदस्य जडस्य जडान्तराच्चात्यन्तभेदस्य स्वीकारात् द्वैतित्वम् । एतन्मते प्रकृतिवत् अव्याकृताकाशोऽपि कश्चित् चैतन्यात्मकमोक्षस्थानातिरिक्तो जडपदार्थोऽस्ति । स भूताकाशभिन्नः सृष्टौ प्रलये चैकरूपो निर्विकारः प्राच्यादिदिग्रूप एकः नित्यः सर्वव्यापी । परमात्मा सृष्टिकाले प्रकृतितः गुणत्रयशब्दवाच्यानि सत्त्वरजस्तमांसि द्रव्याणि विभज्य महदादिसृष्टिमारभते । एतदन्तर्गतं शुद्धसत्त्वमेव मुक्तानां लीलाविग्रहाय भवति । महदहङ्कारतत्त्वे स्तः । बुद्धिमनइन्द्रियाणि प्राकृततत्त्वरूपाणि अन्यरूपाणि चेत्युभयविधानि स्वीकृतानि । तत्र द्वितीयान्तर्गता बुद्धिर्ज्ञानम् । मनः इन्द्रियाणि च नित्यानि ईशलक्ष्मीसर्वजीवस्वरूपभूतानि साक्षिपदवाच्यानि । अनित्यानि च बद्धानाम् । साक्षिस्वरूपस्येन्द्रियस्य आत्मा मनः तद्धर्माः सुखदुःखादयः अविद्या कालः अव्याकृताकाशश्च साक्षात् विषयाः ; शब्दादयो बाह्येन्द्रियद्वारा विषयाः । तत्र शब्देषु वर्णा एकपञ्चाशत्संख्याकाः विभवोऽनादिनित्याश्चोच्चारणादिव्यङ्ग्याः । कालः प्रकृत्युपादानकः क्षणलवाद्यनेकरूपः । परमात्मप्रतिबिम्बत्वमपि तद्व्यतिरिक्तेषु सर्वेषु चेतनेषु स्वीक्रियते । सर्वे जीवा अणुपरिमाणाः । मुक्तावप्यणुत्वमेव । महत्त्वव्यवहारस्तु अणिमाद्यैश्वर्यनिबन्धनः । विष्णोर्लक्ष्म्याश्च विभुत्वेन संमतयोः अणु महत् मध्यममिति त्रिविधं परिमाणमपि युगपदेवास्तीति वदन्ति । तन्नूनं तत्तद्विग्रहस्य तत्तत्स्वरूपत्वांगीकारात् युगपत् विविधविग्रहपरिग्रहसंभवादिति भाव्यम् ।

चैतन्यस्वरूपाः सर्वे आत्मानः इत्युक्तम् । एवञ्च तस्यैव चैतन्यस्य विषयग्राहकत्वसंभवात् धर्म्यतिरिक्तं ज्ञानं नास्ति । "यः सर्वज्ञः" इत्येवं सर्वत्र ज्ञानतदाश्रययोराधाराधेयभावेन भेदप्रतीतिः कथमिति चेत्—प्रतिवस्तु विभिन्नो विशेष इति कश्चित् पदार्थः स्वीक्रियते । स एव भेदतन्मूलसर्वव्यवहारनिर्वाहकः । अत एवेश्वरलक्ष्मीगुणानां तद्विग्रहाणाञ्च तत्तदभेद एव ; भेदव्यवहारस्तु विशेषपदार्थाधीनः । ननु लक्ष्मीश्वरसंयोगः किं लक्ष्म्यभिन्नः, एवमीश्वराभिन्नः । उभयाभिन्नत्वे च तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् लक्ष्मीशयोरप्यभेदापत्तिरिति चेन्न—संयोगस्य द्विनिष्ठस्यैकस्यैतन्मतेऽनंगीकारात् एक प्रतियोगिकत्वान्यानुयोगिकत्वरूपाकारवन्तौ उभौ संयोगौ संयुक्ताविति प्रतीतिविषयाविति । तैः स्वमतप्रमाणतयोपात्तेषु प्रमाणेषु बहुषु तन्मतस्थपुरुषरचितग्रन्थवत् स्पष्टं तत्प्रतिपादकं तन्मात्रदृष्टं ब्रह्मतर्कनामकग्रन्थमनुसृत्य यथायथं भेदाऽभेदविषये तन्मतस्थितिरवधारणीयाऽस्ति । तत्र प्रायो ब्रह्मतर्कश्लोकोदाहरणेन स विषयः प्रतिपाद्यते—

ईशो लक्ष्मीर्जडाः जीवाः भिन्ना एव तथा मिथः । जडानां भेद एवैवं जीवानामपि निश्चितः ॥
"प्रत्यक्षमनुमानञ्च वाक्यञ्चेति त्रिधा प्रमा । चेतनञ्च जडञ्चेति द्विविधं त्विन्द्रियं मतम् । चेतनं त्विन्द्रियं ह्यात्मस्वरूपान्नापरं स्मृतम् । मुक्तानां चेतनं त्वेव बद्धानामुभयं तथा । विष्णोरेव स्वरूपाणां तद्गुणानां तथैव च । तस्यैव शिरआदीनां नैव भेदोऽस्ति कश्चन । अभेदेऽपि **विशेषेण** व्यवहार·

पृथक् भवेत् । विष्णोः क्रियाश्च याः काश्चित् तद्भेदोऽत्र च क्षमः । एवं लक्ष्म्याश्च मुक्तानां स्वरूपैः स्वगुणैरपि । स्वक्रियाभिस्तथैवैक्यं नित्यं स्वावयवैरपि । भेदाभेदस्तु बद्धानां गुणैः स्वैः कर्मभिस्तथा । आंशांशिनोः, गुणस्यापि गुणिनः, कर्मतद्वतोः । कार्योपादानयोश्चैव व्यक्तिसामान्ययोरपि । भेदाभेदो न तु क्वापि विष्णोरस्ति कदाचन । भेद एव हि जीवाद्यैः केवलाभेद आत्मना । तत्क्रियाणां न नाशोऽस्ति तच्छक्तेः पूर्वकालतः । एवं मुक्तक्रिया नित्या नान्येषां भ्रान्तिसंभवात् " इत्येवम् ।

भ्रान्तिज्ञानयथार्थज्ञानयोर्मध्ये यथार्थज्ञानस्य स्वरूपात्मकत्वेऽपि भ्रान्तिज्ञानस्यान्तःकरणपरिणामत्वम् . तस्य बहिरप्रसृतस्यैव विषयेण विषयविषयिभावः संबन्ध इति एतन्मतम् । अत एव भ्रान्तितदधीनक्रियादीनां नात्मैक्यम्, अन्यगतत्वादिति स्यात् । एवं विष्ण्वादेरात्मनः तद्विग्रहस्य चैक्ये, 'किमात्मिका भगवतो व्यक्तिः? यदात्मको भगवान् तदात्मिका' इति विशिष्टाद्वैत्युपात्तवाक्यमपि प्रमाणमेभिर्नीयेत । प्रसिद्धश्च पाड्गुण्यं विग्रहस्यापि । अत एव परकालदिव्यसूरिप्रभृतीनां विग्रह एव परमात्मत्वाभिमानं वदन्ति । उक्तञ्च वरदराजपञ्चाशति श्रीदेशिकचरणैः—

"विश्वातिशायिसुखरूप! यदात्मकस्त्वं व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां सा किं त्वमेव तव वेति वितर्कडोलाम् ॥"

इति । एवं सुप्रसिद्धभेदेष्वपि अभेदवादिन एते न सर्वात्मना तार्किका इव द्वैतिनः । तार्किकैः द्रव्यगुणक्रियादीनां भेदः सर्वात्मना स्वीकृतः, यः शांकरभाष्येऽपि स्वयं भेदाभेदपक्षादररहितेऽपि तार्किकमतनिराकरणाधिकरणे प्रसंगादवशात् खण्ड्यते । जीवजडेश्वराणां भेद एवेत्येतावता स्थितमेषां द्वैतित्वम् । भ्रान्तिज्ञानमिव स्मृत्यनुमित्यादिज्ञानमपि ईशलक्ष्म्योर्नास्ति । किंतु प्रत्यक्षज्ञानमेव तयोस्तत्तद्गृहीतसर्वविषये ।

पूर्वं पञ्चधा विभक्तेषु मुक्तियोग्येषु मनुष्योत्तमाः द्विविधाः-तृणजीवा अन्ये च । आत्मत्वगुणमात्रेण ब्रह्मोपासकाः तृणजीवाः; सत्त्वचित्त्वानन्दत्वात्मत्वरूपगुणचतुष्केण तदुपासकाः अन्ये । देवर्ष्यादयस्तु यथायथं बहुगुणविशिष्टब्रह्मोपासकाः । पुरुषभेदेनोपासनाकालदैर्घ्यं भिद्यत इति सर्वेष्टम् । उपासनतारतम्यात् अपरोक्षज्ञानमपि भिन्नभिन्नाकारं तेषाम् । मुक्तिफलेऽपि तत एव तारतम्यम् । वैराग्यभक्त्युपासनप्रत्यक्षज्ञानरूपेषु क्रमिकेषु उपायेषु सिद्धेषु, परमभक्तिर्जायते । ततो भगवतोऽतिशयितः प्रसादः । ततो मोक्षः । तत्र ये देहावच्छेदेनैवापरोक्षज्ञानवन्तः, प्रतीकालम्बनास्ते भवन्ति । तेषां कार्यब्रह्मप्राप्तौ क्रमेण मोक्षः । अप्रतीकालम्बनास्तु व्याप्तोपासकाः तथासाक्षात्कारिणः परमेव ब्रह्म नीयन्ते । अर्चिरादिमार्ग एषामपि । एकगुणोपासकानामपरोक्षज्ञानानन्तरं न शरीरादुत्क्रमणम् । किंतु शरीरमुच्छूनं नश्यति । ते पृथिव्यादावेवावतिष्ठन्ते । सर्वेषामप्यन्ते सत्यलोके चतुर्मुखोपदेशात् केनचित् क्रमेण मुक्तिः । पूतनाशिशुपालादीनां भगवद्द्विषां कथं मुक्तिरिति चेत्—तत्तच्छरीरं जीवद्वयविशिष्टम् । तत्र भक्तो मुच्यते, अन्यस्तमसि मज्जतीति । मुक्तिश्च स्वरूपानन्दाभिव्यक्तिः । जीवस्वरूपेषु स्त्रीपुरुषभेदोऽप्यस्ति । पुंजातीयानां संसृतौ अनियतं शरीरम्; मुक्तौ पुंशरीरमेव । स्त्रीजीवानां संसृतावपि स्त्रीशरीरमेव ।

एवमानन्दस्वरूपे ज्ञानादौ च तारतम्यस्य स्वाभाविकस्य सत्त्वात् मुक्तौ तारतम्यं सिद्धम् । केषाञ्चिदुपासकानां महत्स्वपराधात् मुक्तौ स्वरूपानन्दाभिव्यक्तावपि ह्रासः । स च न प्रकृत्याद्यावरणाधीनः ; तेषां निवृत्तत्वात ; किंतु परमात्मेच्छामात्रात् । एवं स्वानुभवेन सह ब्रह्मसालोक्यसामीप्यसारूप्यसायुज्येषु यथार्हमाप्त्वा भोगचातुर्विध्यमप्यस्ति । सर्वे परमात्मनः शेषभूताः तत्कैङ्कर्यपराश्च । भगवता परमं साम्यं भोगे सर्वेषां मुक्तानामित्येतदेभिर्नेष्यते इति विशदमेतावता । तस्य तस्य जीवस्य यावदनुभवशक्तिरस्ति, तावत उपायेन साधनेऽपि परकीयानुभवसमानानुभवाभावात् क्लेशस्य नावसरः ; शिशुबालयुवस्थविराणां भुज्यमानस्यान्नस्य परिमाणतारतम्येऽपि तृप्तेरेकरूपतया क्षुदादिक्लेशाभाववत् उपपत्तेः । अतएवेच्छाविरहात् तदधिगमे यत्नस्यापि नावकाशः । विस्तरोऽन्यत्र—इति माध्वमतसंग्रहः ।

अद्वैतिनां निर्विशेषाद्वैतवादमिव द्वैतिनां धर्मधर्मिभेदाभेदादिवादमपि विशिष्टाद्वैतिनो न संमन्यन्ते अद्वैतवादनिरसनप्रावीण्यं पुष्कलं वहन्तोऽपि द्वैतिनः सर्वाभ्युपगत-संप्रदायागतश्रुतिस्मृतीतिहासपुराणादि-मात्रग्रहणेन स्वसिद्धान्तप्रमेयं न स्थापयितुं पारयेयुरिति, अत एव वाक्यार्थवर्णनवैखरी तेषां बहुल न स्वरसेति च विमर्शकानामाशयः । उपादानकारणमपादानकारणश्चेति कारणद्वैविध्यं प्रदर्श्य, ब्रह्मणो जगन्निमित्तत्वमेव, नोपादानत्वमिति वाद एषां वेदान्तव्याख्यातृभ्यः सर्वेभ्योऽपि तीर्थकरेभ्यो न रोचते । शैवतार्किकसरणिरियमित्यध्यवस्यन्ति ।

यस्तु शारीरकशास्त्रव्याख्यादिरूपेण श्रीकण्ठभाष्यादिना प्रवर्तितः **शैवसिद्धान्तः**, सोऽत्यन्तार्वाचीन इति सर्वजनसुविदितमेव । शैवागमाद्यसंमतं शिवस्योपादानत्वमप्यूरीकृत्य उपनिषदादेः शिव-पारम्यपरत्वस्थापने एते श्रद्दधते । एतन्मूलभूतस्य श्रीमदप्पय्यदीक्षितसमकालिकस्य श्रीकण्ठभाष्यस्य यदिमे साग्रहं श्रीशङ्करभाष्यादितोऽपि प्राचीनत्वं प्रतिष्ठापयितुमीहन्ते, नैतच्चित्रम्— यतो नारायणेन परमात्मना समष्टिसृष्ट्यनन्तरं पञ्चीकरणं विधाय ब्रह्माणं सृष्ट्वा तन्मुखेन रुद्रः सृष्ट इति निश्चप्रचेऽप्यर्थे अत्यन्तमर्वाचीनस्य रुद्रस्याऽऽदिकारणत्ववादे यथा प्रवर्तन्ते, तथैव तन्मततत्परभाष्यस्यापि सर्वावरस्य सर्व-प्राचीनत्वप्रतिष्ठापने प्रयस्यन्तीति उभयमप्यसामञ्जस्यमन्योन्यानुरूपमेव । अत एव किं श्रुतिभारतरामाय-णादिबाधेनानेन हठवादेन साधितं भवतीति एतदुपेक्षणमेव रोचयन्ते विपश्चितः । शांकराच्चेदिदं प्राक्तनं स्यात , कथंकारं पाशुपतखण्डनावसरे ते पाञ्चरात्रस्येव शैवस्योपादानत्ववादमप्युपन्यस्य वक्तव्यं न वदेयुः । तदेभिः श्रीकण्ठभाष्यवाक्यानां श्रीभाष्यवाक्यसच्छायतया तत्कर्तुस्तच्चोरत्वं जगत्प्रसिद्धं परिहर्तुकामैः तत्पूर्वभावित्वमात्रे तृप्तिमलभमानैः शांकरादपि पूर्वत्वं वक्तुमारब्धम् । विष्णुचतुर्मुखसृष्टरुद्रान्तरविलक्षणः नारायणस्यापि कारणं शिवः श्रय्यर्थ इतीदञ्च विस्तरेणान्यत्र खण्डितम् । निमित्तमात्रवादिशैवागमविरोध-श्चात्र निष्कम्पः । यदत्र शैवेषु तूष्णीकेष्वेव सत्सु अद्वैतिनः केचित् अखिलभारतव्यापिनि वैष्णवमते स्वसमा-दरणीय एव हन्त विद्वेषं वहन्तः शैवसमयसंधुक्षणेन मुधैव मन्दमतीन् मोहयन्ति, तदेतत् कलिसाम्राज्यम् । सर्वथा शिवपारम्यपरत्वेन कल्पिता शारीरकार्थसरणिरत्यन्तार्वाचीनेति प्रसिद्धद्वैताद्वैतविशिष्टाद्वैततुलां नेय-मारोहतीति किमित्यस्याल्पस्य बहूकरणेनेति सन्तः पश्यन्ति ।

एवं सर्वसंमानितस्य शांकरादिसंमतनारायणपरदेवतात्वप्रतिष्ठापकस्य श्रीवैष्णवसंप्रदायप्राप्तस्य विशिष्टाद्वैतस्य सर्वश्रुत्यैकरस्यवहत्त्वमुपपादयितुं प्रकृतश्रीभाष्यादिकं प्रणीय प्रकृष्टसिद्धान्तप्रवर्तकाचार्यपदं निर्बाधं निरुपमं वहतां श्रीभगवद्रामानुजस्वामिपादानां चरितमिहैवं संजिघृक्षामि—

श्रीभूकेशवसोमयाजितनयः श्रीभूतपुर्युद्भवो
हारीतान्वयदुग्धवारिधिविधुः शेषस्य मूर्तिः परा ।
गायत्री-श्रुति-संप्रदायसरणीः प्राप्यैव यस्ताततो
व्याख्यां यादवमुख्ययोगिकलितां ज्ञातुं तदन्तेऽवसत् ॥ १ ॥

काञ्च्यां हस्तिगिरिश्रितेन महता श्रीयामुनेयेन यो
दृष्टो यादवशिष्यगोष्ठ्युपगतः प्रीत्याऽस्मदीयोऽस्त्विति ।
यस्यार्थे शरणं प्रपद्य वरदं तस्मिन् स्वदेशं गते
योऽसौ यादवनीत ऐच्छदनघो गङ्गादितीर्थाटनम् ॥ २ ॥

कप्यासश्रुतिमुख्यचिन्तनविधौ भग्नो गुरुः स्वात्मनेऽ
निष्टं चिन्तयतीति सोदरमुखाद् विज्ञाय यात्रां त्यजन् ।
एकाकी विपिने विचिन्त्य वरदं तस्थौ य एष क्षणात्
कैराताकृतिदिव्यदम्पतिवशः काञ्चीं समासादयत् ॥ ३ ॥

तीर्थापेक्षिकिरातरूपकमलाकान्तोपचारं चिरं
कुर्वन् यामुनयोगिवर्यकलिते स्तोत्रे कदाचित श्रुते ।
तत्सेवात्वरितोऽपि यो यतिवरश्रीदेहमात्रेक्षणात्
दूनोऽभूदथ तन्मनोरथमहापूर्त्यै च यत्नं व्यधात् ॥ ४ ॥

काञ्चीपूर्णमुखादवेत्य भगवद्भावं स्वयं प्रस्थितः
मध्ये यो मधुरान्तके श्रितमहापूर्णाङ्घ्रिपद्मोऽर्थवित् ।
आज्ञां तस्य वतंसयन् अधिगतः श्रीयामुनेयाश्रितान्
गोष्ठीपूर्णमुखान् परानपि महाप्राज्ञो बभौ भूतले ॥ ५ ॥

श्रीकूरेशसहाय एव सहसा काश्मीरदेशं गतः
यो बोधायनवृत्तिमद्भुतरसामान्तं निरीक्ष्याऽऽगतः ।
वेदार्थं च समग्रहीत् बहुविधप्राच्योक्तिरक्षी व्यधात्
श्रीभाष्यं त्वथ दीपसारसहितं भाष्यञ्च गीताश्रितम् ॥ ६ ॥

प्राप्तो यो यतिराजतां बहुशतैश्छात्रैः शुभैर्योगिभिः
संख्यातीत गृहस्थसेवितपदो देशान् अटन् ऐधत ।
अद्वैतादिमतं निरस्य सगुणश्रीशैकनिष्ठां हरि-
द्वारात् सेतुपदावधि प्रचुरयन् देवालयान् पालयन् ॥ ७ ॥

शेषाद्रौ विनुतोऽथ मातुलवरश्रीशैलपूर्णादिभिः
श्रीरङ्गादिपरिष्कृतिं विरचयन् शैवञ्च विध्वंसयन् ।
श्रीनारायणशैलशृङ्गभुवि यः श्रीशं प्रतिष्ठापयन्
लोकक्षेमपरो भुवं व्यतनुत श्रीवैष्णवैकाञ्चिताम् ॥ ८ ॥

इत्थं श्रीकरिशैलवेंकटगिरि-श्रीयादवाद्रिप्रभृ-
त्यार्यक्षेत्रपरिष्कृतेः परमसौ श्रीरङ्गवासी भवन् ।
दिव्यद्राभिडवेदबोधनपरः श्रीव्यासबोधायन-
श्रीमन्नाथमुनीन्द्रदर्शितपथानीताखिलार्यप्रजः ॥ ९ ॥

सर्वज्ञैः स्वकदर्शनप्रचरणं कुर्वैश्चतुःसप्ततौ
पीठेषु श्रितवत्सलैः प्रपदनं प्रख्याप्य मुक्तौ हितम् ।
भक्तिज्ञानविरक्तिशीलनिगमाचारादि पुष्णन् भुवि
ख्यातोऽभूत्, अयमस्तु मे हृदि सदा रामानुजार्यो मुनिः ॥ १० ॥

औपनिषदविद्यापरिगणनादिकमत्र कार्यं सर्वं बृहदारण्यकोपनिषदादिमुद्रणावसरे तत्तद्ग्रन्थभूमिकायामेव मया कृतमस्तीति तत एव सर्वमवगन्तव्यमिति तदाम्रेडनमिह न रोचये । शारीरकोल्लिखित-विद्याविशेषपट्टिका पुनरिहापि पृथक् निवेशिताऽस्ति ।

शास्त्रावान्तरभेद-अधिकरणनामावल्यादिकं चात्र पृथक् सौकर्याय परिकल्पयामि । एवमनेकावश्यककार्यव्यग्रस्य निर्वहणीयाचार्यचरणानुग्रहपूर्वकनिदेशस्य मे हार्दं निवेदनमत्रैतदेकम्—

अनेन दर्पणेन यो ह्यनुग्रहैकमानसो व्यधत्त भाष्यमुद्रणं वृषाद्रिगः श्रियः पतिः ।
श्रुतप्रकाशिकोपशोभिभाष्यमुद्रणं यदा त्वसावनुग्रहीष्यते तदैव चित्तनिर्वृतिः ॥

25. नाथमुनिवीथी,
ति. नगर, मद्रपुरी 17.
15-11-64

इति श्रीवैष्णवचरणरेणुः व्याख्याता
**वात्स्यसच्चक्रवर्ती उत्तमूर् वीरराघवाचार्यः**
उभयवेदान्तग्रन्थमालासंपादकः

श्रीः

## शास्त्रविभागनामनिर्देशः

मीमांसाशास्त्रमेकं सत् भवेत् विंशतिलक्षणम् । काण्डत्रयात्मकञ्चाऽऽद्ये द्वादशाथान्ययोर्द्वयोः ॥ १ ॥

प्रत्येकं स्युश्च चत्वारि संकर्षब्रह्मकाण्डयोः । ब्रह्मकाण्डे द्विके द्वे स्तः सिद्धो विषय एकतः ॥ २ ॥

साध्यं विषयमन्यमेयं तथाऽऽध्यायाः समन्वयम् । अविरोधं साधनञ्च फलञ्चाऽऽहुः क्रमादिह ॥ ३ ॥

अथैतत्पादनामानि निर्दिश्यन्ते यथाक्रमम् । स्यादयोगव्यवच्छेदोऽस्पष्टजीवादिलिङ्गकम् (कः) ॥ ४ ॥

स्पष्टजीवादिलिङ्गञ्च(श्च) सुस्पष्टेदशलिङ्गकम् (कः) । स्मृति-तर्क-वियत्-प्राणाः वैराग्योभयलिङ्गके ॥५॥

गुणोपसंहृतिश्चाङ्गमावृत्त्युत्क्रान्तिनामकौ । गतिः फलञ्चेत्यथाङ्घ्रिमूलसंख्या निगद्यते ॥ ६ ॥

## पादसूत्रसंख्या

(32) द्वात्रिंशच्च (33) त्रयस्त्रिंशत् (44) चत्वारिंशत् चतुर्युता ।

(29) एकोनत्रिंशदेवाथ (36) षट्त्रिंशत (42) षड्युता च सा ॥ ७ ॥

(52) द्विपञ्चाशत् (19) अथैकोनविंशतिः (27) सप्तविंशतिः ।

(40) चत्वारिंशत् (64) चतुष्षष्टिः (51) एकपञ्चाशदप्यथ ॥ ८ ॥

(19) एकोना विंशतिः (20) पूर्णाऽप्यथ (15) पञ्चदशाथ च ।

(22) द्वाविंशतिर्ब्रह्मसूत्रपादसूत्राणि नः क्रमात् ॥ ९ ॥

## श्रीशारीरकाधिकरणनामावलिः

अथाधिकरणाख्याः स्युर्जिज्ञासाधिक्रियाऽऽदिमा । जन्मादि शास्त्रयोनित्वं चतुर्थश्च समन्वयः ॥१०॥

ईक्षतिश्चाऽऽनन्दमयश्चान्तश्चाकाश आख्यया । प्राणो ज्योतिस्ततश्चेन्द्रप्राणश्चैकादश स्थिताः ॥ ११ ॥

षट् सर्वत्रप्रसिद्धयत्त्रन्तरान्तर्यामिनीतयः । अदृश्यत्वादिगुणको वैश्वानर इति क्रमात् ॥ १२ ॥

द्युभ्वाद्यधिक्रिया भूमाऽप्यक्षरेक्षतिकर्मणी । दहरः प्रमितो मध्ये त्वयः स्युर्देवता मधु ॥ १३ ॥

अपशूद्रोऽर्थान्तरत्वव्यपदेशो दश क्रमात् । आनुमानञ्च चमसस्ततः संख्योपसंग्रहः ॥ १४ ॥

कारणत्वजगद्वाचित्वाख्ये वाक्यान्वयस्ततः । प्रकृत्यधिक्रिया सर्वव्याख्यानञ्चाष्ट नीतयः ॥ १५ ॥

स्यात् स्मृत्यधिक्रिया योगप्रत्युक्तिश्च विलक्षणम् । शिष्टापरिग्रहो भोक्त्रापत्तिरारम्भणं ततः ॥ १६ ॥

इतरव्यपदेशः स्यादुपसंहारदर्शनम् । दश कृत्स्नप्रसक्त्येताः सप्रयोजनवत्त्वथा ॥ १७ ॥

रचनानुपपत्तिश्च महद्दीर्घनयस्ततः । समुदायश्चोपलब्धिः सर्वथाऽनुपपत्तियुक् (तः) ॥ १८ ॥

एकस्मिन्श्चासंभवोऽथ पशुपत्यधिकारतः । उत्पत्त्यसंभवश्चैवं तर्कपादेऽष्ट संमताः ॥ १९ ॥

वियत् तेजस्तथाऽऽत्मा ज्ञः कर्ताऽथ परवानिति। अंशश्च सप्त प्राणोपत्त्याख्या सप्तगतीति च ॥२०॥
प्राणाणुत्वमथो वायुक्रिया श्रेष्ठाणुता ततः। ज्योतिरादेरधिष्ठानमिन्द्रियाधिक्रिया ततः ॥ २१ ॥
स्यात् संज्ञामूर्तिक्लृप्तिश्च द्वितीयान्तेऽष्ट संमताः। तदन्तरप्रतिगतिः कृतात्ययनयस्ततः ॥ २२ ॥
स्यादनिष्टादिकारी तत्स्वाभाव्यापत्तिरित्यपि। अथ नातिचिरश्चान्याधिष्ठितं षडधिक्रियाः ॥ २३ ॥
संध्यश्च तदभावश्च कर्मानुस्मृतिशब्दभाक्। मुग्धश्चोभयलिङ्गाहिकुण्डले च परं फलम् ॥ २४ ॥
अष्टाथ सर्ववेदान्तप्रत्ययं त्वन्यथात्वयुक्। सर्वाभेदाऽऽनन्दतादि-कार्याख्यान-समानतः ॥ २५ ॥
संबन्धः संभृतिः स्यात् पुंविद्या वेधादि हान्युक्। सांपरायश्चानियमोऽक्षरधीरन्तरत्वयुक् ॥ २६ ॥
कामाद्यधिक्रिया तन्निर्धारणानियमस्ततः। प्रदानं लिङ्गभूयस्त्वं ततः पूर्वविकल्पतः ॥ २७ ॥
स्यात् शरीरेभावसंज्ञोऽङ्गावबद्धाह्वयस्ततः। भूमज्यायस्त्व-शब्दादिभेदावथ विकल्पभाक् ॥ २८ ॥
स्यात् यथाश्रयभावश्च नयाः षड्विंशतिः स्थिताः। पुरुषार्थाधिक्रियाऽथ स्तुतिमात्रं भवत्यथ ॥ २९ ॥
पारिप्लवाग्नीन्धनादी सर्वापेक्षेत्यधिक्रिया। अथो शमदमाद्येवं सर्वान्नानुमतिस्ततः ॥ ३० ॥
विहितत्वञ्च विधुरः तद्भूतः स्वाम्यधिक्रिया। सहकार्यन्तरविधिरनाविष्कारनामभाक् ॥ ३१ ॥
ऐहिकं मुक्तिफलकं नयाः पञ्चदश स्थिताः। आवृत्तिरात्मत्वोपासा प्रतीकाधिक्रिया ततः ॥ ३२ ॥
आदित्यादिमतिश्च स्यादसीनश्चाऽऽप्रयाणतः। तदधीतरनामानौ अथानारब्धकार्यकम् ॥ ३३ ॥
अग्निहोत्राद्यधीकारः इतरक्षपणं ततः। एवमेकादशाऽऽद्येऽथ वाङ्मनोऽध्यक्षभूततः ॥ ३४ ॥
आसृत्युपक्रमाख्योऽथ परसंपत्त्यधिक्रिया। अविभागस्तदोकोरश्म्यनुसारो निशाऽपि च ॥ ३५ ॥
दक्षिणायनमित्येवमेकादश नयास्ततः। अर्चिरादिश्च वायुश्च वरुणश्चाऽऽतिवाहिकः ॥ ३६ ॥
कार्यञ्च पञ्च संपद्याविर्भावः प्रथमो नयः। अविभागेनदृष्टत्वं ब्राह्मं संकल्प एव च ॥ ३७ ॥
अभावाधिक्रिया च स्यात् जगद्व्यापारवर्जयुक्। षडेवमिति षट्पञ्चाशच्छतं स्युरधिक्रियाः ॥ ३८ ॥
कृतिनोभयवेदान्तग्रन्थमालाप्रकाशिना। वीरराघवसंज्ञेन वात्स्यसच्चक्रवर्तिना ॥ ३९ ॥
भाष्यार्थदर्पणं कृत्वा शास्त्रान्तर्भागवादिना। इत्थं शारीरकस्याधिक्रियानामावलिः कृता ॥ ४० ॥

---

## भाष्यार्थदर्पणगतानि अमुद्रितानि वाक्यानि

26. पुटे. **तादात्म्येने**ति। रज्जौ सर्पस्य तादात्म्येन निषेधे तस्य निषेधस्याज्ञानाभावसंपादकत्वात् तत्प्रयोज्याभावप्रतियोगित्वमज्ञाने इति वक्तव्यम्। सा प्रतियोगिता स्वरूपसंबन्धावच्छिन्ना, न तु प्रकृततादात्म्यसंबन्धावच्छिन्नेति। ननु निष्कृष्टलक्षणे स्वपदेनाज्ञानग्रहणे अहमज्ञ इतिज्ञानीय स्वप्रकारतावच्छेदकरूपसंबन्धमादाय इयंरज्जुरित्यादियथावस्थितज्ञानप्रयोज्यः अज्ञानरूपस्वविशेष्यभूतजीवनिष्ठो योऽज्ञानाभावः, तत्प्रतियोगिता स्वरूपसंबन्धावच्छिन्नैवेति अज्ञानेऽतिव्याप्तिरस्त्येवेति चेन्न---स्वपदस्य यथा-

वस्थितवस्तुस्वरूपविरुद्धाकाररूपमिथ्यावस्तुस्वरूपपरत्वात् । **यथावस्थितवस्तु** इत्यस्य स्वविरुद्धाकारे-त्यर्थपर्यवसानात्। रज्जुसर्पाकारयोरिव अज्ञानरज्जुत्वयोर्विरुद्धत्वाभावात् । रज्जुत्वकाल एव रज्जवज्ञानस्य संभवात् । अन्ततः यथावस्थितवस्तुज्ञानप्रयोज्येत्यस्य स्वप्रतीतिकालावच्छिन्नेत्यर्थे पर्यवसानमित्यलम् ॥

558. पुटे. **अनृतंवदन्तीति**। सूर्यस्य तदानीमभावेऽपि सूर्याय स्वाहेत्युक्तेः। उदितहोमे च, यथा अतिथये प्रद्रुतायान्नदानम्, तथेति निन्दा। न हि धावित्वा दूरं गतोऽतिथिराराधयितुं शक्यते ; तथेति ॥

607. पुटे. योऽयं मध्यमः प्राणः इति बृहदारण्यक (3-5-21) वाक्यम् । 'एतासां देवतानां मध्यमः प्राणः, एवं वायुः' इति उपर्यस्ति। अग्न्यादित्ययोर्मध्ये वायुः ; अन्तरिक्षगत्वात्—एवमत्र उपरि मुखादौ अधश्च गुदादौ इन्द्रियाणि ; तेषां मध्ये मध्येशरीरं प्राणोऽयमिति अयं मध्यमः ॥

---

## शारीरके औपनिषदविद्याः

तत्र विद्याः प्रथमाध्यायगताः प्रागेव दर्शिताः ; अन्यास्तु—

2-4-1 अधिकरणे—[ असद्वा इति शतपथगा श्रुतिः कारणचित्याग्निसाधननिरूपणशेषभूता ]

3-1-1 पञ्चाग्निविद्या 1.

3-2-1 बृहदारण्यकदहरविद्या 2.

3-2-5 उभयलिङ्गाधिकरणेऽभिप्रेता माण्डूक्यविद्या 3. तत्रैव 21 सूत्रे मूर्तामूर्तब्राह्मणविद्या 4.

3-3-2 उद्गीथप्राणविद्या 5 ; उद्गातृप्राणविद्या च 6.

3-3-3 ज्येष्ठश्रेष्ठप्राणविद्या 7.

3-3-7 अहर्व्याहृतिब्रह्मविद्या 8 ; अहंव्याहृतिब्रह्मविद्या च 9.

3-3-9 आयुःफलकपुरुषविद्या 10 ; न्यासविद्या च 11.

3-3-12 पर्यङ्कविद्या 12.

3-3-15 उषस्तकहोलविद्या 13.

3-3-17 उद्गीथादिविद्याः 14.

3-3-20 पूर्वविकल्पाधिकरणे अग्निविद्याः क्रत्वङ्गभूताः 15.
तत्रैव मण्डलपुरुषमृत्युसादृश्यविद्या 16. लोकम्पृणादृष्टिविद्या च 17.

3-3-21 जीवात्मोपासना 18.

3-3-26 यथाश्रयभावाधिकरणे दर्शनाच्चेति सूत्रे यज्ञपवमानदृष्टिः 19.

3-4-1 पुरुषार्थाधिकरणे 13 सूत्रे ईशावास्यविद्या 20.

3-4-7 उषस्तिविद्याः 21, 22, 23.

एवं प्रथमाध्यायप्रभृत्युपात्तासु विद्यासु परविद्याः कतीति स्वयमेव सुगणम् । अन्याश्च विद्याः उपनिषत्सु स्थिता उपनिषद्भाष्यभूमिकायामेव दर्शिताः ।

॥ शुभमस्तु ॥

# भाष्यार्थदर्पणसहित श्रीभाष्य प्रथमाध्याय विषयसूची

॥ शुभमस्तु ॥

श्रीः

## श्रीभाष्य-भाष्यार्थदर्पण-द्वितीय-तृतीय-चतुर्थाध्याय-

## विशेषविषयसूची ।

॥ श्रीरस्तु ॥

श्रीः

# संगतिसंग्रहः

प्रसङ्गावसराक्षेपाः दृष्टान्तः प्रत्युदाहृतिः ।
अपवादोऽतिदेशश्चोपोद्घातादिश्च संगतिः ॥ १ ॥

निर्वाहकैक्यं कार्यैक्यं हेतुत्वञ्चापि तार्किकाः ।
उपस्थितस्योपेक्षाया अनर्हत्वं प्रसङ्गिता ॥ २ ॥

स्थानप्राप्तिस्त्ववसरः आक्षेपस्त्वथ संगतिः ।
यत्र पूर्वस्थापितस्यासंभवः शङ्क्यते पुनः ॥ ३ ॥

पूर्वाधिकरणन्यायमुपजीव्य तथाविधे ।
स्थलान्तरे पूर्वपक्षे दृष्टान्तः संगतिर्भवेत् ॥ ४ ॥

पूर्वाधिकरणोद्दिष्टयुक्त्यप्रसरयुक्तितः ।
विधान्तराविष्करणे प्रत्युदाहरणं भवेत् ॥ ५ ॥

पूर्वाधिकरणोपात्तविषये क्वचिदन्यथा ।
सिद्धान्तवर्णने भाव्या त्वपवादाख्यसंगतिः ॥ ६ ॥

यत्र पूर्वोत्तरौ पक्षावधिकाशङ्कया पुनः ।
आनीयेते प्राङ्नयस्थौ अतिदेशोऽत्र संगतिः ॥ ७ ॥

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ।
एवमन्याश्च भाव्याः स्युरानन्तर्यप्रयोजिकाः ॥ ८ ॥

॥ शुभमस्तु ॥

UBHAYA VEDANTA GRANTHAMALA



Bhagavad Badarayana's

# Brahma Sutra

OR

# SARIRAKA

WITH

# SRI BHASHYA

by

Sri Bhagavad Ramanuja

and its commentary named

Bhashyartha Darpana

by

Abhinava Desika

Sri Uttamur T. Viraraghavacharya

PART I

PRINTED AT
SREEVATHSA PRESS,
MADRAS-14.

1963

[ Price Rs. 12/-